## २१०४ श्री वी० वि० सू० सं० शास्त्र संग्रह अमदावाद

**श्री युगप्रधानयंत्र** प्र. ८

इतिश्री **भद्रबाहु**प्रणीत दुखमाप्राभृततश्चतुरधिकद्विशहस्रयुगप्रधानस्वरूपं सुखावबोधनार्थं श्रीदेवेंद्रसूरिणा यंत्रपत्रे न्यासोचक्रे **श्रीचंद्रगच्छे** प्रद्योतनाभ **श्रीसोमतिलक**सूरिस्तेषामुपाध्याय **श्री-हंसभवनगणि**प्रसादतः श्रीशिष्य **श्रीकीर्तिभुवनेन** श्रीमति **स्तंभनकपुरे** विक्रमांत् संवत् विश्वमनु १४१३ वर्षे लिखितं **श्रीपद्रपत्तने** श्रीवासुपूज्यप्रसत्तेः

## मु० श्री हं० वि० सं० शास्त्र सं० वडोदरा

**श्री सदेवंत शावलिंगा चोपाइ** प्र. ९

संवत १४१५ ना वर्षे चैत्र शितात् वदि १ वार शनौ भावनगर बिंदर लख्युं छे ५० रुषि **श्रीपदेवजीजी** ऋ० **वाहलजीजी** लपिकृतं मुनि **सोमचंदः**। शुभं भवतु ॥ श्रीरस्तु। कल्याण-मस्तुः। श्रीः ॥

**श्री पाक्षिकसूत्रवृत्तिः** प्र. १०

## पं० श्री प्र० वि० ज्ञान भंडार अमदावाद

संवत १४२३ वर्षे चैत्र वदी ५ सोमे अद्येह श्री **स्थंभतीर्थे** श्रीपाक्षिकसूत्रविवरणं लिखितं ॥ शुभमस्तु ॥

## श्री शां० ज्ञा० भं० खंभात

**श्रीसिद्धचक्रमाहात्म्यम्। (रत्नशेखरसूरिः)** प्र. ११

संवत् १४३० वर्षे फागुण शुदि १३ सोमे **श्रीआगमगच्छे श्रीमुनिसिंहसूरि**शिष्य उदय-रत्नगणिना। लिखितं ॥ **सौराष्ट्र** देशे **मधुमति**स्थितेन।

## श्री जै. सं० ज्ञान, भं० पाटण.

**श्रीषडावश्यकावचूरिः** प्र. १२

एवं ग्रंथ २७२० इति भद्रमस्तु जिनशासनाय, सर्वाभिमतसुमतिज्ञानेंदुकांतिविराजमान सर्वांगावयवसुंदर परमपूज्यभट्टारक **श्रीसोमतिलकसूरि**पादशिष्यलवेन लिखितमस्ति। मंगलमस्तु श्रीचतुर्विधसंघाय ॥ संवत् १४३२ ॥

## ७४३९ श्री वा० पा० जै० ज्ञान भं० पाटण.

**श्रीअनेकांतजयपताका।** प्र. १३

विजयतां श्रीअनेकांत इति। संवत्सर १४३६ पौष सुदि ९ रवौ एवं कालातीते लिखितं। शुभं भवतु सर्वस्य।

## ३६३७ श्री० जै० सं० ज्ञा० नं० राधनपुर

**श्रीसंगीतरत्नावलिः** प्र. १४

संवत् १४३८ वर्षे मार्गशिर वदि १४ रवौ चौलुक्य नृपप्रतीहार श्री**जगदेव** सुत श्री**सोमदेव**राज्ये विरचितायां। संगीत रत्नावल्यां संकीर्ण्ये लक्षणं नवमं प्रकरणं॥

## श्री० जै० सं० ज्ञा० भं० पाटण

**श्रीप्रश्नोत्तररत्नमाला वृत्तिः** प्र. १५

संवत् १४४१ वर्षे चैत्र वदि ४ गुरौ प्रश्नोत्तररत्नमालावृत्तिर्लिखिता॥ श्री पत्तन वास्तव्य ठ० **पेथा** भार्या **मोणलदे** पुत्री **पूजी** श्राविकया श्री भट्टारक प्रभुश्री **जयानंदसूरि** गुरु उपदेशेन प्रश्नोत्तररत्नमाला वृत्ति निज पुण्यकर्मवृद्धये पुस्तिका लिखापिता॥ शुभं भवतु॥

## श्री० जै० सं० ज्ञा० भं० पाटण

**श्रीशब्दानुशासनावचूरिः** प्र. १६

संवत१४४१ वर्षे पोष वदि द्वादश्यां सोमदिने भृगुपुरे पं०पद्मानंदेन न्यासपुस्तिका लिखिता. अत्र शंखादिशब्देन शंखादिसमुदायस्याभिधानात्तस्य चानूर्यागत्वादजातित्वाचनैकवद्भावः॥ श्री **सलक्षणपुर** वासि प्राग्वाट ज्ञातीय मं० **भीमभार्या पोपट** पुत्रेण मं०ठ० **लींबाकेन** जाया **लूणादेवी** भ्रातृव्य० **मांसारंगादि** कुटुंबयुतेन सम्यक्त्वमूल द्वादशव्रत धारिणा दानादि चतुष्प्रकारधर्माराधकेन नित्यं षड्विधावश्यककरणादगण्यपुण्यानुयायिनां तपागच्छनशोभास्कर **श्रीदेवसुंदरसूरीणा**मुपदेशेन चतुष्कयास्वपुस्तान्तरे श्रीवसुदेवहिण्डि प्रथमखंडं चालेख्यत॥सुधीभिर्वाच्यमानश्चिरं नंदतात्पुस्तकोऽयमिति॥

## श्री. जै. सं, ज्ञा, भं. पाटण.

**श्रीशब्दानुशासनम्** प्र. १७

संवत् १४४९ वर्षे कार्तिक वदि त्रयोदश्यां शनिवारदिने श्रीमति **अणहिलपत्तनपुरवरे वीरमवाटकशालायाम**लेखि॥ शुभं भवतु चतुर्विधश्रीश्रमणसंघाय॥ लेखकपाठकयोश्च॥छ॥

## श्री वी० वि० सू० सं० ज्ञान भंडार अमदावाद्

**श्रीअजापुत्ररास ।** प्र. १८

इतिश्री....सत्वाधिकारे सप्तमः खंडः समाप्तः । पंडितश्री ५ श्री**नित्यविजय**गणि तत्शिष्य भाविमुनि **जीवविजयेना**लेखि । संवत् १४५ ? वर्षे कार्तिक सुदि ७ दिने श्रीरस्तु । कल्याणमस्तु । शुभं भवतु । लिषितं श्री**रामनगरे** लेखकवाचकयोः ॥

## ४४२८ श्री. नि. वि. जी. म. ज्ञा. भं. चाणस्मा

**श्रीमंडलप्रकरणवृत्तिः** प्र. १८

इति श्रीमंडलप्रकरणवृत्तिः संपूर्णा संवत् १४५ ? वर्षे चैत्र वदि २ ससूत्र ग्रंथाग्रं ९३१ श्लोक संख्या । सकलपंडितो श्री. श्री. श्री. पं. **रत्नकुशल**ग० तत्शिष्य पं. **दीपकुशल**ग० पं. **अमिविजय**गणि लिखितं श्री**सुरतबिंदरे** श्रीपार्श्वनाथजी प्रसादात् ॥ श्री ॥

## ७८७७ श्री० जै० ज्ञा० भं० विजापुर

**श्रीसुपार्श्वनाथचरित्रम् ।** प्र. १९

संवत् १४५४ वर्षे फागण वदि ९ भौमे लिखितमिदं पुस्तकं ॥ छ ॥

श्री**कायस्थ**विशाल वंशगगनादित्योऽत्र **जाना**भिधः
संजातः सचिवाग्रणीर्गुरुयशाः श्री**स्थंभतीर्थे** पुरे ।
तत्सूनुर्लिखनक्रियैककुशलो **भीमा**भिधो मंत्रिराट्
तेनायं लिखितो बुधावलिमनःप्रीतिप्रदः पुस्तकः ॥ छ ॥ शुभं भवतुः ॥

## श्री० जै० सं० ज्ञा० भं० पाटण.

**श्रीपार्श्वनाथचरितम्** प्र. २०

**कलिकुंडे मथुरायां चारुवर्मेशंखपुरे**
**नागहृदे लाटहृदे स्वर्णगिरि** प्रमुख तीर्थेषु ॥

पंचपंचमनुसंख्य वत्सरे १४५५ पौष मुख्य सुतिथौ दिने विधोः ।
श्रीमतिप्रथित **पत्तने पुरे** लेखकेन लिखितं सुपुस्तकम् ॥ १ ॥
श्रीमालवंशे कमलावतंसे श्रेष्ठी पुराभूद् भुवि **वीरपालः** ।
देवे गुरौ वाद्भुतभक्तियुक्तः ख्यातो गुणैश्चंद्रकराभिरामैः ॥ २ ॥

पुण्यैकपात्रं तत्पुत्रो **नरसिंहो**ऽभवत् सुधीः ।
**हीमादेवी** प्रिया तस्य प्रशस्यगुणशालिनी ॥ ३ ॥
सुतौ तयो **धूंलिग मेलिगौ च** सदा सदाचारविचारवीरौ ।
सद्धर्मशास्त्रश्रवणैकचित्तो जीयाच्चिरं पूर्णशशांककीर्तिः ॥ ४ ॥
**मेलादेवी** तत्प्रिया भाति सौभाग्यश्रीगेहं धर्म्मकार्ये नियुक्ता ।
भक्ता देवे सद्गुरौ चातिनम्रगेहस्यांतर्जंगमा कल्पवल्ली ॥ ५ ॥
श्रीनागेंद्रगणेऽगण्यपुण्यसंभारभूषिते ।
श्रीपद्मचंद्रसूरींद्रः प्रबभूव गुणैकभूः ॥ ६ ॥
तत्पट्टपूर्वाचलभास्करः **श्रीरत्नाकरः सूरि**वरा बभूव ।
पट्टेऽस्य **रत्नप्रभसूरि**रेषः श्रीमान् जयी निर्ज्जितकामवीरः ॥ ७ ॥
तत्पदे जयति जंगमतीर्थं **सिंहदत्तगुरु**रेष गुणाढ्यः ।
यः सतां प्रथमकः कलिकार्ये चंद्रगौरयशसा प्रसृतश्च ॥ ८ ॥
श्रीमते **सिंहदत्ताय** शुद्धचित्ताय सूरये ।
न्यायोपार्जितवित्तोऽयं **मेलिगः** श्रावकाग्रणीः ॥ ९ ॥
॥ पार्श्वनाथ चरित्रस्य प्रददौ पुस्तकं शुभं ॥

## श्री० जै० सं० ज्ञा० भं० पाटण

### विवेकमंजरी

प्र. २१

संवत् १४५९ वर्षे फागण वदि ४ रवौ मूधा (महुधा) ग्रामे लिखितमिदं प्रकरणं परात्मभणनार्थं॥ ॥ छ ॥ छ ॥

## श्री जै० सं० ज्ञा० भं० पाटण.

### श्रीकालिकाचार्यकथा

प्र. २३

ओकेशान्वयहीरो **हीरो** नाम्ना बभूव नागपुरे ।
जिनधर्मलीनचित्तो वित्तोपचयी गुणी साधुः ॥ १ ॥

धर्मिणी नाम्नी पत्नी तस्यासीद्देवसंघगुरुभक्ता ।
पुत्रौ च पूर्णसिंह केशवनामा च धर्ममतिः ॥ २ ॥
देउरिति पुत्री चाबाल्यादपि शुद्धदेवगुरुभक्तिः ।
सम्यक्त्वदेशविरतिप्रमुखाद्दत्सुकृत सत तरतिः ॥ ३ ॥
सरस्वतीपत्तनवास्यया ऽभूद्धीराभिधः साधुरुदारचित्तः ।
विचित्रपुण्यप्रथितप्रसिद्धिर्विशुद्धधीः कर्मिणिरस्य पत्नी ॥ ४ ॥
अभूवन् पुत्राश्च तयोः सज्जनसुभटौ च शालिगो विज्ञः ।
संग्रामसिंह सरवणनामानौ पंच भूविदिताः ॥ ५ ॥
प्राप प्रतिष्ठाः व्यवहारिवर्गे सत्पुण्यनिष्ठा सुगुणप्रतिष्ठाः ।
श्रेष्ठाः सतांसच्चरितैर्गरिष्ठाः स्वेच्छा जिनेन्द्रोदिततत्त्वपंक्तौ ॥ ६ ॥
तेषु संग्रामसिंहेन परिणीता विवेकीनी ।
सादेउ विशदाचारा सर्वधर्मविचारवित् ॥ ७ ॥
उभयकुलोद्योतकरी निर्मलशीलप्रभान्विता नित्यं ।
सा दीपिकेव पुण्यं कुरुते ऽपूर्वा निरंजना बाढम् ॥ ८ ॥
सावद्ययोगविरतोपधानसत्पौषधादिविधिनिरता ।
वपति धनानि क्षेत्रेषु आवश्यकसत्क्रियो युक्ता ॥ ९ ॥
देवकुलपाटकपुरे व्यरीरचत् प्रौढदेवकुलिकायाम् ।
ऋषभजिनाधिपचैत्ये, प्रतिष्ठिते श्रीतपाचार्यैः ॥ १० ॥
संघार्चाजिनयात्रामालारोपादिविविधपुण्यानि ॥
कुवार्णा सम्यक्त्वं दधाति सुलसेव या शुद्धम् ॥ ११ ॥
श्री देवसुंदरयुगोत्तमसूरिशिष्य—
श्रीसोमसुन्दरतपागुरुसूपदेशात् ।
सा ऽलीलिखद् द्विगजरत्नशरद्यथात्म—(१४८२)
श्रेयस्कृते विशदकल्पप्रतीश्च पञ्च ॥ १२ ॥
॥ इति भद्रं भवतु ॥

## १३३ श्री जै० वि० ज्ञा० भं० अमदावाद.

**श्रीअल्पबहुत्वविचारः** प्र. २४

संवत १५०१ वर्षे फा० सुदि ५ दिने लिखिता। आनंददर्शनगणिना पूज्याराध्य पं० श्रुतशेखरगणिपादप्रसादात् ॥

## श्री जै० सा० पु० सुरत

**श्रीउपदेशमाळास्तबकः** प्र. २५

सं० १५०१ वर्षे मार्गशिर शुदि ११ भृगुरेवत्यां श्री उपदेशमाला सावचूर्णिः । साहश्री **वछा** भार्या बाइ **गुरुदे** सुत साह**सहिसकिरणेन** भंडार गृहीत्वा सुत **वर्द्धमान शांतिदास** परिपालनार्थं ॥ छ ॥

## श्री वाडीपार्श्वनाथजी ज्ञान भंडार पाटण.

**श्रीक्रियारत्नसमुच्चयः** प्र. २६

संवत् १५०१ वर्षे पौष शुदि ११ रवौ श्रीखरतरगच्छेश श्री जिनराजसूरि शिष्याणु उपाध्याय श्री**जयसागराणा**मुपदेशेन सम्छिप्य **रत्नचन्द्र** पठनार्थं परोपकारार्थमयं सबीजकः क्रियारत्नसमुच्चयो नाम ग्रंथोऽयं अलेखि ॥ वाच्यमानोऽयं ग्रंथश्चिरं नंदतु ॥ छ ॥ श्री ॥ छ ॥

## श्री वी० वि० सू० ज्ञान मंदिर राधनपुर.

**श्रीतत्त्वालोकः तर्कः** संस्कृत टीका प्र। २६

इतिश्री**मदनुभूतिस्वरूपाचार्य**शिष्येण विद्वद्वृंदपादारविंदप्रणतकंधरेण श्रीमता **जनार्दनेन** विनिर्मि श्रीतत्वा·······लोके द्वितीयोऽध्याय ॥ छ ॥ ग्रंथाग्रं १२८ श्री संवत् १५०१ वर्षे ज्येष्ठ मासे शुक्लपक्षे दशम्यां रविदिने तत्वालोके द्वितीयोऽध्यायेति परिपूर्णा ॥ छ ॥ श्री ॥

## १८४१ आ. श्री वि० दा० सू० सं० शा० सं० छायापुरी.

**श्री नंदिनी विधि** ( सोनेरी अक्षर ) प्र. २८

सं. १५०१ वर्षे चैत्र सुद १ तिथौ श्री**मदणहिलपुरे** श्रीखरतरगच्छे श्री श्री**जिनभद्र**सूरि श्री**कीर्तिरत्न**सूरीणाम् उपदेशेन **लावण्यशील**गणिभिः नंदिसूत्रं । सा० **नागराज** भार्या **माजाटी** श्राविकया सुत **साजण** पुत्रिका **सोनाइ** वधु **सायाइ** पौत्र **उदयसिंहेन** लिखितं ॥ श्रीः ॥

## श्री. जै० सं० ज्ञा० भं० पाटण.

**श्रीभर्तृहरिशतकम्** प्र. २९

संवत् १५०१ वर्षे ज्येष्ठ मासे शुक्ल पक्षे १४ चतुर्दश्यां तिथौ, गुरुवारे श्री**रुद्रपल्लीयगच्छे** उ० श्री**नरचंद्रशिष्येण** वा० **देवचंद्रेण** भर्तृहरिकृतं शतत्रयं लिखितम् ॥

## श्री. वाडीपार्श्वनाथ-ज्ञान भंडार पाटण.

**श्रीसारस्वतसूत्रम्** प्र. ३०

संवत् १५०१ वर्षे माघमासे शुक्लपक्षे द्वितीयायां तिथौ शनिवासरे ॥ छ ॥ श्रीपत्तने लषापिता। परिपूर्णः ॥ छ ॥ छ ॥ छ ॥

## श्री. मु० वि० शा० सं० छाणी.

**श्रीसिद्धहेमशब्दानुशासनवृत्तिः** प्र. ३१

संवत् १५०१ वर्षे वैशाख शुदि ४ चतुर्थी रवौ **जेसलमेरौ** श्रीखरतरगच्छे श्री**जिनभद्र**-सूरिभिः पुस्तिकेयं लिखापितं। शुभं भवतु ॥

## आ. श्री. वि० लब्धिसूरि सं. ज्ञान भंडार खंभात.

**श्रीहैमप्राकृतव्याकरणम्** प्र. ३२

संवत् १५०१ वर्षे मार्गशीर्ष वदि ९ रवौ प्राकृतसूत्रवृत्तिश्च पुस्तिका लिखितेति भद्रम् ॥ आगमगच्छे श्रीहेमरत्नसूरिभिः ॥ मंगल महाश्रीः ॥ १ ॥ देहि विद्यां परमेश्वरि !॥ शुभं भवतु। कल्याणमस्तु लेखकपाठकयोः ॥

## मु. श्री हं. वि. सं. शास्त्र संग्रह. वडोदरा.

**श्रीउपदेशमाला** (सावचूरिः) प्र. ३३

संवत् १५०२ वर्षे श्रावण सुदि १२ शुक्रे श्रीउपदेशमालाप्रकरणं लिखितं ॥ छ ॥ श्री **अवंत्यां** महास्थाने पंन्यास**विनयानंद**योग्यं लिखितं ॥ छ ॥ श्री ॥ श्री ॥

## प्र. श्री. का. वि. सं. शा. सं. वडोदरा.

**मल्लिनाथचरित्रमहाकाव्यम्** प्र. ३४

संवत १५०१ वर्षे जेष्ठ सुदि १२ सोमे **वढालंबी** ग्राम स्थितेन लिखिता पुस्तिका श्री आगमगच्छे श्री**मुनिसिंहसूरि**शिष्य श्रीवाचनाचार्य **विजयसिंह**योग्या ॥ छ ॥ ५० ॥

तिथि युग मिति **वर्षे** मल्लिनाथस्य कीर्त्तनं। पंडितो**दयरत्नेन** लिखितं पुण्यहेतवे ॥ १ यादशं................

शुभं भवतु.

## श्री. जै. सं. ज्ञा. भं. पाटण.

**श्रीहरिविक्रममहाकाव्यम्** प्र. ३५

इत्यागमिकश्रीचारित्रप्रभसूरि शिष्य श्री जयतिलकसूरि विरचिते तद्बांधव अमरकीर्तिगणि- लिखिते महाकाव्ये श्रीहरिविक्रममहोदयो नाम द्वादशः सर्गः ॥ स्वस्ति श्री संवत् १५०२ वर्षे क्रोधन नाम संवत्सरे ॥ कार्तिक वदि १२ बुधवासरे इडर नगर सुरत्राण अहम्मदसुत सुरत्राण अलावदीन विजयराज्ये ॥ पंडित देवदत सुत कृष्णदेवेन इदं पुस्तकमलेखि ॥

सं. १५०२ उ. सा. सोमा भा० नारु सुत सा० धीना भा० वरसिणि पुत्री सा० कान्हा भा० सांइ नाम्न्या स्वश्रेयोऽर्थं मुनिसुंदरसूरीणामुपदेशेन श्रीहरिविक्रमचरित्रमलेखि ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीअभिधानचिंतामणि (नाम माला.)** प्र. ३६

सं० १५०३ व० का० वदि १२ दिने लखिता मंडली नगरे ॥

## श्री. जैन सं. ज्ञा. भं. वडोदरा.

**श्रीपार्श्वनाथचरित्रम्** प्र. ३७

संवत् १५०३ वर्षे आसो वदि ४ गुरौ श्रीपार्श्वनाथचरित्रपुस्तकं लिखापितमस्ति ॥

संवत् १५०४ वर्षे वैशाख शुदि षष्ठी भौमे श्री प्राग्वाट ज्ञातीय मं० धना भा० धांधलदे पुत्र मं० मारू भार्या चमकू पितृ मातृ स्वश्रेयोऽर्थं श्रीपार्श्वनाथचरित्रपुस्तकं अलेषि ॥ श्री भीमपल्लीय श्री पूर्णिमापक्षे मुख्य (ख्य) श्री पासचंद्रसूरिपट्टे श्री ३ जयचंद्र सूरिभिः प्रदत्त ॥

## श्री. जैन सं. ज्ञा. भं. पाटण.

**श्रीभुवनभानुकेवलिचरित्रम्** प्र. ३८

संवत् १५०३ वर्षे चैत्र सुद १० दिने वार सोमे ॥ श्री भुवनभानुकेवलिचरित्रं लिखितं लब्धिवर्धनगणिना श्रीसत्यपुरमहानगरे ॥ श्री ॥

## आ. श्री. वि. मे. सू. सं. ज्ञा. भं. अमदावाद.

**श्रीअजितशांतिस्तवनम् ( सवृत्ति )** प्र. ३९

संवत् १५०४ वर्षे माह सुदि त्रयोदशी दिने वसंतपुरपत्तने संयमसमुद्रगणियोग्यम लेखि ॥ छ ॥ श्री ॥

## श्री वाडीपार्श्वनाथ ज्ञानभंडार पाटण.

**श्रीचंपू मंडनम्** प्र. ४०

संवत् १५०४ वर्षे शाके १३६९ प्रवर्तमाने आषाढ शुदि १३ त्रयोदश्यां सोम दिने **तारापुर-स्थाने** पुस्तकमलेखि ॥

## श्री वाडीपार्श्वनाथ ज्ञानभंडार पाटण.

**श्रीसम्यक्त्वरत्नमहोदधिः** प्र. ४१

संवत् १५०४ वर्षे आसो सुदि १० सोमवारे पूर्णिमागच्छे **सिंहप्रभसूरि**संताने । भ० श्री**पुण्यचंद्रसूरि** शिष्य गणिवर **जयसिंह** गणिना **राणपुर** नगरे सम्यक्त्वरत्नमहोदधिपुस्तकं लिखितं परोपकारहेतवे । शुभं भवतु ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीसिद्धहेमशब्दानुशासनम् (पंचाध्यायावि)** प्र. ४२

संवत् १५०४ वर्षे मार्गसिर मासे कृष्णपक्षे दशम्यां तिथौ शनिदिनौ शुभयोगे । हस्त नक्षत्रे । पंचमी उद्यापने ॥ पं ॥ भट्टारकश्री **जयचंद्रसूरि** । शिष्य पं० **तिलकवीरगणियोग्यं** ॥ श्रेष्टि **राणकस्य** सुताभ्यां **जांइ आघीभ्यां** लिषितं । यादृशं................न दीयते ॥ पुस्तिका तृताया लिषिता ॥ श्रीः ॥ ग्रंथाग्रं १०० ॥

## प्रवर्तक श्री कां. वि. सं. शा. सं. वडोदरा.

**श्रीहरिविक्रमचरित्रम्** प्र. ४३

सं० १५०४ वर्षे **पानविहानगरे** माघ सुदि ७ दिने सा० **टापरेण** स्वश्रेयसे पं०**नयरत्न गणि**वाचनार्थमलेखि । श्रेयसे भूयात् श्रीश्रमणसंघस्य ॥ छ ॥ श्री ॥ छ ॥ श्री ॥

## श्री विजय सा. सं. शा सं. छाणी.

**श्रीआवश्यकसूत्रम्** प्र. ४४

प्रशस्तिः ॥ श्रीआवस्सयं सम्मत्तं ॥ छ ॥ सर्व गाथा ग्रं० २५०० ॥ छ ॥ संवत् १५०५ वर्षे द्वितीय भाद्रवा सुदि ९ बुधवासरे श्री **नंदुरवारे पुरे** लिखितं ॥ शुभं भवतु श्रमण संघाय ॥ मंगलमस्तु यादृश......................मम दोषो न दीयते

## २५४० श्री वि. वी. सू. ज्ञा. मंदिर राधनपुर.

**श्रीकर्मग्रंथः** प्र. ४५

इतिबंध सामित्तं समत्तं ॥ छ ॥ सं. १५०५ वर्षे माघ मासे सुदि ने म (?) बुधवारे श्री देवकुले नगरे ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीक्षेत्रसमासः** प्र. ४६

संवत् १५०५ वर्षे आसो शुदि १ दिने लिखितं सुधाचूला गणिनी पठनार्थं शुभं भवतु लेखक पाठकयोः ॥

## ७७०२ श्री जि. चा. सू. सं. ज्ञा. भं. बिकानेर.

**श्रीप्रत्याख्यानभाष्यावचूरिः** प्र. ४७

संवत् १५०५ वर्षे भाद्रक वदि १२ भोमवारे लिखितं ॥ छ ॥ देपाकेन लिखितं । शुभं भवतु ॥....श्री । प्रधानफल माह ॥ पच्च० सुगमा । ४८ । इति प्रत्याख्यानभाष्यावचूरिः ॥ श्री-आवश्यकवृत्तितः ॥ कृता संक्षिप्ता श्रीसोमसुंदरसूरिपादैः ॥ श्री ॥

## श्री वाडीपार्श्वनाथ ज्ञानभंडार पाटण.

**श्रीकुमारसंभवपंजिका** प्र. ४८

संवत् १५०६ वर्षे आश्वि० वद७ शनि रोहिण्या श्रीमति स्थिरापद्रनगरे पंजिकेयमलेखि ॥ भद्रं भवतु लेखकपाठकयोः ॥ श्री

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीचंदाविजयपयन्नो ( प्रकीर्णकम् )** प्र. ४९

संवत् १५०६ वर्षे माघ वदि १४ बुधे श्री वटपद्रनगरे लिखापिता ॥ श्रीसर्वज्ञाय नमः । मंगलमस्तु ॥

## ७६८८ श्री जि० चा० सू० सं० ज्ञा० भं० बिकानेर.

**श्रीजीवप्रबोधप्रकरणम् (भाषा)** प्र. ५०

इति श्री जीव प्रबोध प्रकरणसंपूर्णं ॥ छ ॥ संवत् १५०६ वर्षे मार्गसिर सुदि ६ भृगुदिने श्रीहिसारदुर्गे । पंडित विद्याकीर्तिगणिकृते लिपितमिदं वा० अभयचंद्रगणिना ॥ शुभं भूयात् ॥

## ७८८४ श्री जैं० ज्ञा० भं० विजापुर.

**श्रीशीलोपदेशमाळा** प्र. ५१

॥ अंकतोऽपि ग्रंथाग्रं ६४०४ सं०१५०६ समये आश्विन सु०५ लिखितमिदं ।शुभमस्तु।

## आ० श्री वि० दा० सु० सं० शा. सं. छाणी.

**श्रीवाक्यप्रकाशः (त्रिपाठः)** प्र. ५२

प्रशस्तिः ॥ इति वाक्यप्रकाशाभिधमौक्तिकस्य टीका संपूर्णा इति भद्रम् । ॥ शुभं भवतुः ॥ ॥ छ ॥ श्री ॥ छ ॥ ॥ न १३० ॥ मुनि गगन शरेंदु (१५०७) वर्षे हर्षेण **सिद्धपुर** नगरे । प्राथमिकस्मृतिहेतोर्विहितो वाक्य प्रकाशोऽयं ॥ १३१ ॥ इति वाक्यप्रकाशसूत्रं संपूर्ण ॥ छ ॥ ॥ ० ॥ श्री ॥ शुभं भवतु ॥ छ ॥ छ ॥ छ ॥ छ ॥

## श्री० जैं० आ० पु० सुरत.

**श्रीउत्तराध्ययनानि** प्र. ५३

संवत् १५०८ वर्षे फाल्गुन वदि १० दशम्यां तिथौ गुरुवारे अद्येह श्री**वटपद्र**महानगरे उत्तराध्ययनप्रतिर्लिखापिता ॥ छ ॥ सकलसंघाय ॥ छ ॥ श्री ॥ छ ॥

## आ० श्री० वि० दान० सू० सं. शा० सं० छाणी.

**श्रीकल्पसूत्रावचूरिः** प्र. ५४

प्रशस्तिः ॥ त्तिबेमि ॥ छ ॥ कल्पाध्ययनदशाश्रुतस्कंधमध्यगतं ॥ छ ॥ ग्रंथ १२१६ ॥ सं० १५०८ वर्षे ॥ चैत्र वदि ११ सोमालेखि.

## मु० श्री० हं० वि० सं० शास्त्रसंग्रह. वडोदरा.

**श्रीपिंडविशुद्धि दीपिका.** प्र. ५५

सं. १५०८ वर्षे । श्रीदेवकुले । प्रतिपत्तिथौ ॥ भोमदिने लिखितं ॥ श्री ॥ छ ॥ श्रीः ॥

## श्री० जैं० आ० पु० सु० २४

**श्रीभाष्यत्रयावचूरिः** प्र. ५६

सं १५०८ वर्षे जेष्ट शु ४ सोमे आंबा लिखितं.

## श्री जैन संघ ज्ञानभंडार पाटण.

**श्रीवासुपूज्यचरित्रम्** प्र. ५७

संवत् १५०८ वर्षे कार्त्तिक सुदि द्वितीया भूमे ष(प)ल्लिकास्थाने श्री उपकेसगच्छे **सिद्धसूरि** शिष्य **मेघकुमार**मुनिलिखितं ॥ शुभं भूयात् ॥

## श्री जैन सं० ज्ञा० भं० पाटण.

**श्रीश्राद्धप्रतिक्रमणसूत्रविवरणम्** प्र. ५८

अथ श्रीनृपविक्रमादित्यराज्ये संवत् १५०८ वर्षे ज्येष्ठ वदि ११ मंगलवासरे उत्तराभद्र पद नक्षत्रे श्री**सरस्वतीपत्तना**भ्यंतरे ॥ श्री ॥

## आ० श्री वि० ने० सू० सं० चित्कोश. खंभात.

**श्रीकल्पसूत्रम्** प्र. ६०

संवत् १५०९ वर्षे ० मार्ग सुदि १३ । शनौ लिखितं **वाछाकेन** ॥ स्वस्ति ॥

वंशोऽस्ति **श्रीमालः** सुपर्वशालः कुलीनसुरसालः ।
सन्मुक्तामयमालः स्फुरत्प्रवालः किल विशालः ॥ १ ॥
तत्राभव**मथाल**गोत्रं पुण्यपवित्रं स्वस्ति शुभसत्रं ।
तस्मिंश्च **विजयपाल**स्ततोऽजनि श्राद्धमंडलिकः ॥ २ ॥
तत्पुत्रो **रणसिंहः** श्राद्धः समभूत्प्रदानरणसिंहः ।
**मंदोदरी**नितस्याजनि जाया जातगुणजाता ॥ ३ ॥
तदंग जाता अभवन्महान्त ॥ श्चत्वार एते चतुराशया ये ।
औदार्यधैर्यादिगुणप्रधाना दानादिधर्म्मा इव मूर्त्तिमंतः ॥ ४ ॥
आद्यः **सामंत**नामास्ति द्वैतीयीकः **सुसागरः** ।
तार्त्तीयीकश्चा**षढाक**स्तुर्यो **नानिग**नामकः ॥ ५ ॥
तेषु **सामंत**संज्ञस्य **भूया**नाम्नीतिगेहिनी ।
तत्पुत्रास्त्रय एते सुधर्म्मकामार्थसाधकाः ॥ ६ ॥
**भटसिंहो**ऽस्ति प्रथमात्मजः **पालो** द्वितीयकः ।
तृतीयो **वस्तुपाला**ख्यः **कर्माइ** भगिनी तथा ॥ ७ ॥
आद्यस्य गेहिनी **धन्य धनाइ बटुक** सुतः ।
**गउरी जाइका राम**त्यभिख्याः पुत्रिकास्तथा ॥ ८ ॥
द्वितीयस्यतु **श्रृंगारदेवी** जायांगजः **पुनः** ।
**सदाक**स्तु तृतीयस्य **सोनाइ** सहचारिणी ॥ ९ ॥

एवं सतंत्राअय एव बांधवाः सद्धर्म्मकार्याणि समाचरंतः ।
वर्षेष्टखेथिंदुमिते अर्केषुरुद्यापनं पंचमिका तपस्य (!) ॥ १० ॥

तेऽलीलिखन् पर्युषणाख्यकल्पं स्वर्णाक्षरैश्चारुविचित्रचित्रम् ॥ ११ ॥
श्रीवीरपट्टांबुजबासरेशः श्रीमत्सुधर्म्मागणभृद्बभूव ।
उद्योतनः सूरिरभूदभूरिः श्रीवर्द्धमानो गुणवर्द्धमानः ॥ १२ ॥

दुर्लभनृपतेः खरतरबिरुदं लब्धा जिनेश्वरः सूरिः ।
चंद्रयशा जिनचंद्रसूरिः संवेगगुणधामा ॥ १३ ॥

नवांगीविवृतेर्धाताऽभयदेवमुनीश्वरः ।
विश्वस्य वल्लभः सूरिर्जिनवल्लभनामकः ॥ १४ ॥

युगप्रधानो जिनदत्तसूरिः सैद्धांन्तिकः श्रीजिनचंद्रसूरिः ।
दुर्वादिजेता जिनपतिसूरिः जिनेश्वराख्यश्च जिनप्रबोधः ॥ १५ ॥

जिनचंद्रसूरिजिनकुशलसूरि–जिनपद्मसूरिगुरवः स्युः ।
जिनलब्धिर्जिनचंद्रो जिनादयः सूरि जिनराजः ॥ १६ ॥

जयंत्यमी श्रीजिनभद्रसूरयो येषां निदेशाद्विषमेऽपि काले ।
श्रीरवनाथबुर्दश्रृंगमुख्य स्थाने भवंत्येवविहारपंक्तिः ॥ १७ ॥

संवत्सरे नंदखचापचंद्रमिते (१५०९) सुधीभिः किल वाच्यमानः ॥
श्रीनृश्रुसिप्रीतिमुपादधानः समर्थितः पुस्तक एष नंद्यात् ॥ १८ ॥

श्रीकल्पपुस्तकप्रशस्तिः ॥ छ ॥ श्रीश्री शुभं भवतु ॥ कल्याणमस्तु ॥

## ३६४४ श्री० जै० सं० ज्ञा० भं० राधनपुर.

**श्रीदशवैकालिक अवचूरिः** प्र. ६१

इति संवत १५०९ वर्षे मागसर सुदि १ दिने लिषित । लेहारूपकस्य लिष्यतः । मिति। भद्रं भूयात् । श्री तपागछ । पुस्तिका । मंगलमस्तु । छ ।

## मु०·श्री० हं० वि० सं० शास्त्र संग्रह वडोदरा.

**श्रीनंदीसूत्रवृत्तिः** प्र. ६२

संवत १५०९ वर्षे ज्येष्ठ मासे शुकल पक्षे बुधवासरे । ( श्रीमदंचलगच्छे श्रीधर्मशेखर-सूरीश्वराणां ग्रंथोऽयं मोढ ज्ञातिय – धमाकेन लिखितः ॥ शुभं भूयात्

## आ० श्री० वि० दा० सू० सं. शा० सं० छायापुरी.

प्र. ६३

**श्रीशांतिनाथचरित्रम्**

प्रशस्तिः ॥ संवत् १५०९ वर्षे आषाढ सुदि २ सोमे अद्येह **अणहिल्लग्राम**मध्ये श्री-तपागच्छे श्री**सोमसुंदरसूरि**शिष्य **पं० रत्नहंस**गणिवाचनार्थं श्रीशांतिनाथचरित्रं ॥ **प्राग्वाट** वंश शा० **कर्मसीह**केन लिखापितं ॥ लेखक उदीच ज्ञाती म० **धरणीधरेण** लिखितं ॥ शुभं भवतु ॥ **वडगच्छ** शाख **तपागच्छ**नायक श्री**सोमसुंदरसूरि**-श्री**मुनिसुंदरसूरि**-श्री**जयचंद्रसूरि**-श्री**जिनसुंदरसूरि** पट्ट परंपरागत संप्रति विजयमानश्री श्री**रत्नशेखरसूरि**-श्री**उदयनंदिसूरि**-श्री**लक्ष्मिसागरसूरि** सूरिश्री **सोमदेवसूरि**शिष्य पं० **रत्नहंसगणी**नामुपदेशेन सं० १५११ वर्षे **मालवदेशे खरसउद**नगरे तपापक्षे **प्राग्वाटज्ञातीय** सा० **नानु** भा० **राजू**सुत सा० **पासड** सा० **देल्हा** सा० **पेथा** सा० **गोगा** सा० **डूंगर**नामानस्तेषु सा० **गोगा** भा० **सावित्** सुत सा० **कर्मसिंहेन** भा० **काठी** पुत्र **वाछा** भार्तृ सा० **आल्हा** भा० **नांइ** भगिनी **टरकू** प्रमुख स्वकुटुंबयुतेन सविस्तरं पंचम्युद्यापनं कुर्वता शांतिचरित्रं लिखापितं ॥

## श्री वाडीपार्श्वनाथजी ज्ञानभंडार पाटण.

प्र. ६४

**श्रीनवतत्वावचूरिः**

इति नवतत्वविचारः संपूर्णः लिखितः संवत् १५१० वर्षे मार्गशीर्ष मासे श्री **चित्रकूटमहानगरे** श्रीमंडनेन पठनार्थं ॥ छ ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

प्र. ६५

**क्षेत्रसमासः ( सावचूरिः पंचपाठ )**

परमगुरुगच्छनायक श्री **जयचंद्रसूरीश्वर** शिष्य भट्टारक प्रभु श्री **उदयनंदीसूरि** शिष्यलिखिता। **मल्हादन महानगरे** सं० १५१० वर्षे कार्तिक शुदि ८ दिने । भद्रं भवतु । श्रीश्रमणसंघस्य ॥

## श्री. वि. अ. ज्ञा. भं. साणंद.

प्र. ६६

**श्रीयोगशास्त्रबालावबोधः**

सं. १५११ वर्षे फागण सुदि ५ दिने **नामि रहवाडा** ग्रामे लिखितः । श्री योगशास्त्रे बालावबोध ॥ पूज्याराध्ये विबुधशिरोमणि पं. **धीरमूर्ति**गणि शिष्यचन्द्रसूरगणिना स्वपरोपकाराय । छ । शुभं भवतु श्रीश्रमणसंघस्य । छ ।

## श्री वाडीपार्श्वनाथ ज्ञान भंडार पाटण.

**श्रीषडशीतिकावचूरिः** प्र. ६७

**उन्नतदुर्ग**वास्तव्य पाग्वाट् ज्ञातीय दो०**पोमा**, सुतधुलाभार्या हषुसुत **अमारा**दिपरिवार परि-वृत्तेन, प्रतिररीलिखिता, सं०१५११ वर्षे चैत्रशुदि ११ शुक्रे पं०५ तिष्टा**रत्नगणिनामु**पदेशेन॥छ॥

## प्रवर्त्तक श्री० कां० वि० सं० शा० सं० वडोदरा.

**श्रीसिद्धहेमशब्दानुशासनम्** (तृतीयोऽध्यायः) प्र. ६८

संवत १५११ वर्षे ज्येष्ठ शुदि पूर्णिमायां तिथौ शनि दिने **कंडारी** ग्रामे उपाध्याय **कृष्णाकेन** लिखितं ॥ यादृशं.......न दीयते ॥ भग्नपृष्टि........पालयेत् ॥ शुभं भवतु लेषक पाठकयोः

सं. १५५० वर्षे पू० पं **धर्मसोम गणि** पादैर्दशपाद न्यासः ॥ **सिद्धांतमाणिक्यमुनि**-पठनार्थं समर्पितः ॥ पुण्यार्थं पठन पाठन हेतवे ॥

## आ० श्री० वि० दान० सूरि० सं० शा० सं० छाणी.

**श्रीआवश्यक निर्युक्तिवृत्तिः** प्र. ६९

इति प्रशस्तिः ॥ पंडित **रत्नहंस**गणि कृत्वा लिखिता दो० **पूजाकेन** ॥ सं० १५१२ वर्षे पं० **धनकलश** गणि पादानां विहारितः स्वभ्रातुः दो० **बालाकेन** ॥ श्रीः ॥

## श्री० मो० सं० ज्ञान भं० सुरत.

**श्रीप्रबंधः** प्र. ७०

संवत. १५१२ वर्षे भाद्रवा वदि पंचमी दिने अलेखि पूज्य पं० **तीर्थराज**गणिपादानां विलोकनार्थं ॥ पं० **हंसदेव**गणिना **डाभिला** ग्रामे. ॥ श्रीः ॥

## श्री वाडीपार्श्वनाथजी ज्ञानभंडार पाटण.

**श्रीरत्नशेषर कथा** प्र. ७१

संवत् १५१२ वर्षे ज्येष्ठशुद ५ दिने **खदिरालय** नगरे महोपाध्याय श्री **चारित्ररत्नगणि**-शिष्य **हंसदेव** गणिनालेखि.

## श्री वाडीपार्श्वनाथजी ज्ञान भंडार पाटण.

**श्रीआवश्यकनिर्युक्तिः** प्र. ७२

प्रशस्तिः ॥ समाप्तं श्रीमदावश्यकसूत्रं ॥ ग्रंथाग्रं २५०० ॥छ॥ संवत्त १५१३ वर्षे श्रावण

शुदि ९ भृगौ श्रीआवश्यकसूत्रलिष्यता ॥ **घूर** ग्रामे **साधूआ** (ज्ञा)तीय ठ० **कान्हा**सुत ठ० **हरदास** लिष्यता ॥ ० ॥ छ ॥ छ ॥ श्रीशुभं भवतु ॥ कल्याणमस्तु ॥ श्री ॥

## श्री० जै० सं० ज्ञा० भं० पाटण.

**श्रीप्रत्याख्यानभाष्यावचूर्णिः** प्र. ७३

संवत् १५१३ वर्षे **ज्ञानशीलगणि**विलोकनार्थं पं० **उदयभूषणगणि**शिष्येण लिखिता स्वपरोपकाराय **गंधार**महानगरे ॥

## प्र० श्री० का० वि० सं० शा० सं० वडोदरा.

**श्रीसिद्धहेमशब्दानुशासनम्** प्र. ७४

संवत् १५१३ वर्षे अषाढ मासे दशम्यां तिथौ शनिदिने **कंडारी**ग्रामे ॥ उ. कृष्णाकेन लिखितं ॥ यादशं............पंडित श्रीश्रीश्रीश्री **जयानंदगणि** जयवंता वर्तो सहीज ॥ छ ॥ बंध मुष्टि.

## शेठ. आ० क० ज्ञानभंडार लींबडी.

**श्रीकल्पसूत्रम्** **संस्कृत** प्र. ७५

ग्रंथाग्रं १२१६ ॥संवत १५१४ वर्षे माघ सुदि २ सोमे मंत्रि **देवा** लिखितं ।

**प्राग्वाटा**न्वयशेखरोऽजनि वरो मन्त्रीश्वरः **केशव**-
स्तत्पत्नि जिनधर्मभक्तिचतुरा संज्ञाभते **देमती** ।
तत्पुत्रो **गुणराज**मन्त्रिनिपुणः **पासादि** पुत्रान्वितो
भार्या **रूपिणि** राजितो विजयते लक्ष्मीयुतो धर्म्मवान् ॥१॥

तेन मातृप्रमोदायाऽलेखि श्रीकल्पपुस्तकं । वृद्धशाखा**तपागच्छे** श्री**ज्ञानकलश** गुरोः ॥२॥
विद्यागुरोरुपाध्याय **चरणकीर्ति** पादक्षुपां । विजयाख्यिधु निश्राणो प्रदत्तं भक्तिभाजिना ॥३॥
श्रीपूज्य भ० श्री **विजयरत्न** सूरीन्द्र गच्छाधिपे । पं० **विजयसमुद्र**गणींद्राणां दत्तं । श्रीकल्पपुस्तकं ॥

## मु० श्री० दो० वि० शा० सं० छाणी.

**श्री कविरहस्यम्** प्र. ७६

प्रशस्तिः इति कवि रहस्यं संपूर्ण ॥ सं. १५१४ वर्षे लिखितं. **सांपला** ग्रामे

## श्री० जै० सं० ज्ञा० भं० पाटण.

**श्रीगुणस्थानक्रमारोहचूर्णिः** प. ७७

संवत् १५१४ वर्षे **नालच्छापुरे** मार्गसिर सुदि १५ दिने सा० **जिणदत्तेन** लिखितेयं

## श्री० जै० ज्ञा० शा० भं० वीजापुर.

**श्रीनेमिनाथचरित्रम्** प्र. ७८

सं० १५१४ वर्षे माघ मासे शुक्ल पक्षे १३ दिने, श्री**खरतर**गच्छे श्री**सागरचंद्र**सूरि शिष्य वा० **महिमराजगणि**तच्छिष्य वा० **दयासागर**गणिना समलेखि ग्रंथोऽयं.

## श्री० जै० सं० ज्ञा० भं० पाटण.

**श्रीप्रज्ञापनासूत्रम्** प्र. ७९

संवत् १५१४ वर्षे मार्गसिर सुदि १० दशम्यां तिथौ शनिवासरे श्रीमत्**द्विवंदनिकगच्छे सिद्धाचार्य**संताने श्री**देवगुप्तसूरीणां** पट्टालंकारश्री**सिद्धसूरीणां** पुस्तककोशे श्रीप्रज्ञापनांगं लिषापितं ॥ शुभं भवतु ॥

## प्र० श्री० का० वि० सं० शा० सं० वडोदरा.

श्रीमलयसुंदरीचरित्रम् प्र. ८०

इत्यागमिकश्री**जयतिलकसूरि**विरचिते ज्ञानरत्नोपाख्याने मलयसुंदरीचरिते शीलावदातपूर्वभववर्णनो नाम चतुर्थः प्रस्तावः ॥ छ ॥ संवत १५१४ वर्षे ज्येष्ट सुदि १२ गुरौ पुस्तिका लिखिता ॥ शुभं भवतु । कल्याणमस्तु ॥

## मु० श्री० हं० वि० सं० शा० सं० वडोदरा.

**श्रीमलयसुंदरीचरित्रम्** प्र. ८१

संवत १५१४ वर्षे पोष वदि ११ बुधे ॥ श्री**स्तंभतीर्थे** । श्री**आगमगच्छे** श्री**हेमरत्नसूरि**शिष्य **धर्मरुचिगणि**लिखापितं । **मुरारि**लिखितं चिरं नंदतु । शुभं भूयात् ॥ सर्वेषां प्राणिनां कल्याणं भूयात् ॥ **धर्मरुचिगणिना** लिखापितं कल्याण राज्याणि प्रभोगि (?) ॥

## श्री० नि० वि० जि० म० पु० चाणस्मा.

**श्रीशत्रुंजय महातीर्थ महात्म्यम** प्र. ८२

संवत १५१४ वर्षे फाल्गुण शुदी पंचमी शनौ **जीवा**लिखितं ॥ ग्रंथाग्रंथ १००० ग्रंथ संपूर्णः ॥

## श्री० जै० सं० ज्ञा० भं० पाटण.

**श्रीआवश्यकवृत्तिः** प्र. ८३

इति पंडित **सरवण** लिखितं ॥ छ ॥ संवत् १५१५ वर्षे श्रावण वदि १२ बुधवारे **श्रीकुंभलमेर**महादुर्गे राणाश्री**कुंभकरण** विजयराज्ये ॥ श्रीतपागच्छे ॥ **सोमसुंदरसूरिपदे**

## प्र. श्री. कां. वि. सं० शा. सं, वडोदरा.

**श्रीउत्तराध्ययनम्** (सावचूरि पंच पाठः) प्र. ८४

संवत् १५१५ वर्षे फागुण वदि ४ भूमे ॥ श्री **पत्तन** वास्तव्य । लिखितमस्ति । ब्राह्मण देवाकेन.

## मु० श्री हं० वि० सं० शा० सं० वडोदरा

**श्रीपुष्पमाला प्रकरणम्** प्र० ८५

संवत् १५१५ वर्षे ओकेशवंश विशाले करण मुक्तामणीयमान । सा० **जइता** भा० **जइतलदेव्या** तपागण गगनांगण दिनमणि समान श्री. ५ **सोमसुन्दरसूरि** शिष्य श्री **मुनिसुंदरसूरि श्रीजयचंद्रसूरि** शिष्य गच्छाधिराज श्री**रत्नशेखरसूरीणा**मुपदेशेन लिखितो ग्रंथोऽयं वाच्यमानो विद्वद्भिराचंद्रार्कं नंद्यात् ॥ शुभं भवतु ॥

## श्री जै० सं० ज्ञा० भं० पाटण.

**श्रीआवश्यकचूर्णिः** प्र. ८६

संवत् १५१६ वर्षे कार्तिक वदि २ रवौ अद्येह श्री**घोघा वेलाकूले** महाराजाधिराज पातसाह श्री **महम्मदराज्ये** तन्नियुक्त व्यापारी **सं० सोमदत्त** प्रतिपत्तौ । श्रीमद्धर्मभृतां वरिष्ठतपसां **पं. सत्यविशालगणि** प्रभृतिनां महात्मनां तेषामर्थे पुस्तकमिदमलेखि ॥ स्वार्थं तथा परोपकाराय ।

## श्री० जै० सं० ज्ञान भं० पाटण.

**श्रीउपदेशमालाप्रकरणम्** प्र. ८७

संवत् १५१६ वर्षे ज्येष्ठ शुदि ४ दिने **कंसारीनगरे शुभहर्षगणिना** लिखितं स्वपरोपकाराय ॥

## श्री० जै० सं० ज्ञा० नं० पाटण.

**श्रीओघनिर्युक्तिः** प्र. ८८

संवत् १५५६ वर्षे आषाढ विदि ( वदि ) १५ वार गुरु–वृसिपिति, **अवंतीथाने** साह **पूंजा**लिखितं ॥ शुभं भवतु ॥ कल्याणमस्तु

## श्री० उ० खा० जै० ज्ञा० भं० झींझुवाडा.

**श्रीओघनिर्युक्तिः** प्र. ८९

सं. १५१६ वर्षे आश्विन सुदि २ दिने शुक्रवारे श्री **वीरमगाम**नगरे समर्थिता **श्रुतानंद**-गणिना स्वपरोपकरिणा ॥

## प्र० श्री० का० वि० सं० शा० सं० वडोद्रा.

**श्रीधनाचरित्रम् (दानकल्पद्रुमः)** प्र. ९०

सं. १५१६ वर्षे भाद्रपद सुदि ९ गुरुवासरे मालवकमंडले० **उज्जयिन्यां** महापुर्यां बृहद्-गच्छे पूज्य भ० श्री श्री श्री **रत्नप्रभसूरि**पट्टे श्री**हेमचंद्रसूरि** तच्छिष्य वा० श्री**ललितकीर्ति**लिखा-पितं ॥ छ ॥ शुभं भवतु ॥

## श्री लहेरुभाई वकील ज्ञान भंडार–पाटण.

**श्रीप्रवचन सारोद्धार सूत्रम्** प्र. ९१

संवत १५१६ वर्षे माघ वदि १४ गुरौ ॥ श्री**अहमदाबाद**वास्तव्य–**प्राग्वाट्**ज्ञातीय मं **महुणसी** भार्या **महुणदे** सुत महं **लाषा** भार्या **वंदेउ** महं श्री**ठाकुरसी** भार्या **झबकू** सुत **केहुला** वेला भार्या **कर्मादे मेघू** एतेमें **केहुला** भार्या **कर्मादे** आत्मश्रेयोर्थे स्वहस्तेन लक्षितं (लिखितम्) ॥ शुभं भवतु ॥

## श्री० जै० सं० ज्ञा० नं० पाटण.

**श्रीश्राद्धविधिप्रकरणवृत्तिः** प्र. ९२

संवत् १५१६ वर्षे श्रावण सुदि ७ वार गुरु श्री पत्तन वास्तव्यमंत्री लींबालषितं ॥ छ ॥

संवत् **१५१६** वर्षे द्वि चैत्र सुदि **२** वार सोमे **श्री पत्तन** वास्तव्य मंत्री **लींबा लिखितं**॥

## श्री० मु० वि० शा० सं० छाणी.

**श्रीषडावश्यक बालावबोधः** प्र. ९३

संवत १५१६ वर्षे आश्विन सुदि प्रतिपदिने **कोटाणक** नगरे श्रीषडावश्यक **बालावबोधः** पं **रत्नहंसगणि**शिष्य **माणिक्यमंदिर** गणिना लिखितः ॥ स्वान्योपकाराय चिरं जयतु ॥

## मु० श्री० हं० वि० सं० शास्त्र संग्रह वडोदरा०

**श्रीसम्यक्त्वकौमुदी** प्र. ९४

संवत् १५१६ वर्षे आश्विन वदी अष्टमी दिने सोमवारे **खानपुरग्रामे** सकलपंडितचक्र-चूडामणि पंडित श्री **भानुचंद्र** तत् शिष्य पंडित श्री ५ श्री सकलशास्त्र पारगामि **मुनिचंद्र**वाचनकृते ॥

## श्री. जैन विद्याशाला ज्ञानभंडार अमदावाद.

**उत्तमकुमारचरित्रम्** प्र. ९५

पूज्याराध्य पं० **जयनंदि** गणि शिष्येण **भावराज** गणिनाऽलिलिखत् मध्ये श्री**पत्तन** महा-नगरे संवत १५१७ वर्षे गणिनी प्रवर **सुमतिलब्धिगणिनी** वाचनाय चिरं नंदतात ॥

## श्री जैन संघ ज्ञानभंडार पाटण.

**श्रीनेमिनाथचरित्रम्** प्र. ९६

संवद् १५१७ वर्षे फाल्गुन शुदि तृतीया दिने मंगलवारे सिद्धियोग गजयोगे सप्तक्षेत्र्यां **सांपलाग्रामे** सुविहित शिरोमणि चारित्रलक्ष्मी हृदयालंकारहार तपागच्छे श्री **सोमसुंदरसूरि** श्री **मुनिसुंदरसूरि**शिष्यवचनाचार्यशिरोमणि पूज्य पं० **शिवसमुद्रगणि**पादानां शिष्य पं० **हेममंगलगणिना**ऽलेखि ॥

## श्री. नि० वि० जी० म० ज्ञा० भं० चाणस्मा.

**स्वोपज्ञशब्दानुशासनलघुवृत्तिः** प्र. ९७

संवत् १५१७ वर्षे कार्तिकसुदि ५ गुरौ श्री **खरतरगच्छे** श्री **सोमकुंजरोपाध्यायानां** लिखितं॥

## श्री. नि. वि. जी. मणि. ज्ञा. भं. चाणस्मा

**श्रीस्वोपज्ञशब्दानुशासनम्** प्र. ९८

संवत् १५१७ वर्षे कार्तिक शुदि ५ गुरौ श्रीखरतरगच्छे श्री **सोमकुंजरोपाध्यायानां** लिखितं ॥

## श्री. जैन. सं. ज्ञा० भंडार पाटण.

**श्री द्वात्रिंशिका** प्र. ९९

संवत् १५१७ वर्षे कार्तिक वदि १० बृहस्पति वारे भट्टारक प्रभुश्री ३ **लक्ष्मीसागरसूरि-** शिष्य **श्रुतमूर्तिगणिना श्रीस्तंभतीर्थे** महानगरे शुभं भवतु ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी

**भवभावनाचूरिः** प. १००

प्रशस्तिः ॥ इति भवभावनावचूरिः कथा संपूर्णा लिखिता ॥ छ ॥ समाप्ता ॥ छ ॥ शुभं भवतु ॥ लेखकवाचकयोः शुभं कल्याणं भूयात भवतु ॥ छ ॥ १५१८ वर्षे श्रावण वदि ४ रवा-वद्येह श्री**वटपद्र**नगरेऽसौ भवभावनावचूरिः लिषापिता ॥छ॥ श्री श्रमणसंघाय भद्रं भवतु ॥छ॥छ॥

## श्री० जैन० सं० ज्ञा० भं० पाटण

**श्रीआवश्यकनिर्युक्तिः** प्र. १०१

श्री परमगुरु श्रीतपागच्छाधिराज श्रीपूज्य श्री**सूरसुंदरसूरि**-शिष्य-**सारशेखरगणिना** लिखितं ॥ सं. १५१९ वर्षे ॥

## श्री० जि० चा० सू० सं० ज्ञानभंडार बिकानेर.

**श्रीगणधरसार्धशतकलघुवृत्तिः** प्र. १०२

श्री संवत १५१९ वर्षे अश्विन सुदी १३ बुधे । श्री । श्री । श्री । अद्येह श्री **पत्तन** वास्त-व्य । म० **घना** लिखितमस्ति । छ । श्री ग्रंथाग्रंथ १६०० । छ ॥

## श्री० जै० सं० ज्ञा० भं० पाटण,

**श्रीमलयसुन्दरीचरित्रम्** प्र. १०३

संवत् १५१९ वर्षे चैत्र वदि १ दिने सोमवारे, विलोकनार्थं ॥ **अमरभूषण** गणिना लिखितं॥ **नंदुरबार** नगरे ॥ यादृशं..........................मम दोषो न दीयते ॥ १ ॥ भग्नदृष्टिकटीग्रीवा ........................यत्नेन प्रतिपालयेत् ॥

## श्री० जैन० सं० ज्ञा० भं० पाटण.

**श्रीव्याकरणम्** प्र. १०४

( चतुर्थपादपर्यंत )

सं० १५१९ वर्षे आसो सुदि २ शनौ श्री **लास महानगरे** लिपिता ॥ छ ॥

## श्री. जैन. सं. ज्ञा. भंडार पाटण.

**श्रीहरिश्चन्द्रकथा** प्र. १०५

संवत् १५१९ वर्षे मार्गशिर सुदि ५ शुक्रवारे । **नलवहे ग्रामे** । श्रीचंद्रप्रभचैत्यालये । विद्याधरशाखायां भट्टारक श्री **जयसिंहसूरी**श्वरान्वये पूज्य श्री **नयचंद्रसूरि**....................वा० श्री **चारुचंद्रेण** अलेषि ॥

## श्री० मो० मो० ज्ञानभंडार पाटण.

**श्रीउपदेशमाला लघुवृत्तिः** प्र. १०६

संवत् १५२० वर्षे मार्गशीर्ष वदि १० दिने लिषितं ॥ **श्रीजिनसागर**सूरिशिक्षणी **राजलक्ष्मी**गणिनी पठनार्थं लिपितं **श्रीपत्तने** लेपक **कान्हा** लिपितं ॥ शुभं भवतु ॥

## श्री० जै० आ० पु० सु०

**श्रीचतुर्विंशतिप्रबन्धः** प्र. १०७

संवत् १५२० वर्षे माघ वदि ८ अष्टम्यां भौमवासरे ॥ श्रीतपागच्छे श्री. ५. **श्री सोमसुन्दरसूरि श्री मुनिसुंदरसूरि श्री जयचंद्रसूरि**शिष्यः चतुर्विंशति प्रबंधानां प्रतिमेतामलिखत ॥ लेखक वाचकयोः कल्याणं भूयात् ॥ सुभं भवतु ॥

साहाश्री **वडा** भार्या बाइ **गुरुदे** सुतसाह **सहिसकिरणेन** भंडारे गृहित्वा सुत **वर्द्धमान शांतिदास** परिपालनार्थं

## श्री० हु० मु० जै० ज्ञा० भं० सुरत.

**श्रीदमयंतीकथा** प्र. १०८

सं० १५२० वर्षे माघमासे सुक्लपक्षे सप्तम्यां रवौ । इलदुर्गे श्री भाणराज्ये

## श्री० जै० सं० ज्ञा० भं० पाटण.

**श्रीविशेषावश्यकवृत्तिः** प्र. १०९

॥ ९० ॥ संवत् १५२० वर्षे कार्तिक वदि चतुर्दशी बुधे **श्रीपत्तननगर** पूर्वदेशमंडनं **माणिक्यपुर**वास्तव्य मंत्रिदलीयवंशेकारागोत्रे श्रीजिनधर्म्मवासित **ठ० नगराज**पुत्र ठ० **लाधू**भार्या श्राविका **धर्मि** कुक्षिकासारहंसेन **श्रीयवनपुरीय** सुरत्राण लब्धाधिकारमहत्वेन तद्देशनिवासि-समाकारितश्रीचतुर्विधसंघसहितेविहितश्रीशत्रुंजयश्रीगिरनारादिमहातीर्थयात्रोत्सवेन तद्देशानीतसमीचीन-विविधवस्त्रविशेषपरिधापितमहात्मामहासतीश्रावकादिश्रीचतुर्विधसंघेन संतोषितभट्टचट्टादिबंदीजनेन श्रीसम्यक्त्वशीलधारकेण श्रीजिनशासनप्रभावकेण ठ०........................ठ० **वछा ठ० सुदर्शन-**प्रमुखपरिवारसहितेन भार्या **सं० वीरसिंघि**देसहितेन—

( पछीथी अक्षरो वांची शकाय तेवा नथी. )

## श्री० हु० मु० जैन ज्ञान भंडार.

**श्रीसंदेहदोलावली** प्र. ११०

संवत् १५२० वर्षे श्रीखरतरगच्छे श्री**जिनभद्रसूरि**पट्टालंकार श्री**जिनचंद्रसूरि**गुरुषु **विजय-**मानेषु श्री**पत्तननगरे श्रीकमलसंयमोपाध्यैरयं** ग्रंथोह्यलीलिखत् । साधुभिर्वाच्यमानश्चिरं नंदतु ॥ श्री ॥ छ ॥ श्री ॥

## श्री जैन संघ ज्ञान भंडार पाटण.

**श्रीस्वप्नविचारः** प्र. १११

संवत १५२० वर्षे वैशाख शुदि १३ दिनेऽलेखि **तिलककल्याण**गणिभिः **वामइया** ग्रामे ॥ श्री ॥

## श्री वाडी पार्श्वनाथजी ज्ञान भंडार पाटण.

**श्रीआवश्यकवृत्तिः** प्र. ११२

संवत १५२१ वर्षे अश्वनि वदि शुक्र दिने अद्येह श्री**सीरोहीनगरतीरे लासस्थाने** पुस्तिका लिषिता ॥

## श्री जैन संघ ज्ञान भंडार पाटण.

**श्रीआवश्यकनिर्युक्तिः** प्र. ११३

संवत् १५२१ वर्षे पोष शुदि १० दिने ॥ श्री तपागच्छ नायक भ० श्री **लक्ष्मीसागर-सूरि**सेवक सुश्रावक **प्राग्वाट** ज्ञातीय **महं झुंझा** पठनार्थं श्रीआवश्यक लिखापिता ॥ श्री**पत्तन** वास्तव्य जोसी **गदा** लिखितं । श्री**मंडन महादुर्गे**

## श्री जैन संघ ज्ञान भंडार पाटण.

**श्रीप्रवचनसारोद्धारसूत्रम्** प्र. ११४

इति श्रीप्रवचनसारग्रंथः संपूर्णो लिखितः **पं. चरणसाधुगणिना** ॥ विशुद्धसश्रद्ध श्राद्धकुलाभिरामे श्रीमति **धांणता** ग्रामे स्वसमयार्थसार्थविलोकनभणनगुणनाय परोपकाराय च ॥

भूनेत्रबाणाअवनिसंमितेऽब्दे १५२१ वैशाखमासासितरामघस्रे ।
अलीलिखत् ग्रंथममुं मुमुक्षुविशुद्धबुद्धिश्**चरणादिसाधुः** ॥

## श्री वाडी पार्श्वनाथजी ज्ञान भंडार पाटण.

**सिद्धहेमलक्षणबृहद्वृत्तिः** प्र. ११५

संवत् १५२१ वर्षे **शीरोही** वास्तव्य उकेशवंशीय **माल्हू** गोत्रीय साह **सहसा** भार्या **सोनलदे** पुत्र **साहइला** सुश्रावकेन भ्रातृ **सेला चांपा** पुत्र **पद्मा जिनदास** प्रमुष परिवार सहितेन श्रीखरतरगच्छे श्री**जयसागर**महोपाध्याय शिष्य श्री**रत्नचंद्र** महोपाध्यायानामुपदेशेन श्रीसिद्धहेम-लक्षणबृहद्वृत्तिकक्षपुटग्रंथोऽलेषित वाच्यमानः चिरं नंधात ॥ लेषक **विश्वनाथ** लिषितं ॥

## श्री जैन संघ ज्ञान भंडार पाटण.

**श्रीउपदेशमालावचूरिः** प्र. ११६

संवत् १५२२ वर्षे वैशाष शुदि ८ अष्टमी गुरुवारे श्री **मंडपदुर्गे** श्री **लक्ष्मीसागर सूरीणां** उपदेशेन लिखापित लेषक **सा० सोमापार्श्वे** ॥ शुभं भवतु ॥

## मु. श्री हं. वि. सं. शास्त्रसंग्रह वडोदरा.

**श्रीकल्पसूत्रम्** ( सोनेरी ) प्र. ११७

संवत् १५२२ वर्षे भाद्रपद सुदि २ शुक्रे **पवनपुरे** श्री **हुसेनसाहिराज्ये** । श्रीमाल-

ज्ञातीय **सं० कालिदास** भार्यया **सं० हरसिनि** श्राविकया पुत्र **धर्म्मदास** सहितया कल्पपुस्तकं लिषापितं । विहारितं च श्रीखरतरगच्छे श्री **जिनभद्रसूरि** पट्टालंकार श्री **जिनचंद्रसूरि** राजादेशेन श्री**कमलसंजमो**पाध्यायानां । लिखितं च गौडान्वय कायस्थ पं० **कर्म्मसी**हात्मज **वेणीदासेन** ॥ शुभं भवतु ॥

## श्री हरजी जै० शा० ज्ञा० भं० जामनगर.

**श्री जंबुस्वामी चोपाइ** प्र. ११८

संवत पंनर बावीस (१५२२) रवि आसो वदि पूनिम जइए, भणइगुणइ नरनार जेही मनि उपसम रसि रमइए ॥ ७५ ॥ श्री जंबुसामी सीद्धिगामी भवह पंच तण उचरी, उपगार करमी बुधि सामीर चिउ देवइ भव करी । जे भावे भणिस्यइ क्षमा करिसइ काज सरिसइ तेहना । ७६ । इति श्री जंबुस्वामी चउपइ पत्तेः **करगचंदकचरेण** लीषीतं.

## आ० श्री विजयदान सूरीश्वर सं० शास्त्र संग्रह छाणी.

**श्रीवाग्भट्टालंकारः(सवृत्तिः)** प्र. ११९

सं. १५२२ वर्षे मार्गशिर वदी सप्तमी सोमदीने पंडित श्री**नेमिरत्न**गणि योग्यं. पुस्तकं आकारैः कतियिमि (?) ॥

## १७६० आ० श्री विजयदान सूरीश्वर सं० शास्त्र संग्रह छाणी.

**श्रीआवश्यकनिर्युक्तिः** प्र. १२०

संवत् १५२३ वर्षे श्रावण सुदि ९ भृगौ आवश्यक सूत्र लिष्यत ॥ घूरग्रांम, **साधूआज्ञा**तीय ठ० **कान्हा**सुत ठ० **हरदास** लिष्यत ॥ श्रीरस्तु ॥ कल्याणमस्तु ॥

## श्री जैन आनंद पुस्तकालय सुरत.

**श्री अंतरंगयुद्धकथा.** प्र. १२१

सं. १५२३ वर्षे ज्येष्ठ मासे शुक्लपक्षे दशम्यां तिथौ श्री **बीसल**नगरे ल० **हीराणंद**लखितं ॥

## श्री० वा० पा० ज्ञा० भं० पाटण.

**श्रीदर्शनशुद्धिः(सवृत्तिः)** प्र. १२२

संवत् १५२३ वर्षे आषाढ शुदि २ गुरौ अद्येह श्री **पत्तन**मध्ये लिषितं ॥ आचार्य **कृष्णदा**सलिषितं ॥

## श्री जैन विद्याशाळा ज्ञानभंडार अमदावाद.

**पुद्गल तथा निगोद छत्रीसी (सवृत्तिः)** प्र. १२३

संवत् १५२४ वर्षे कार्तिक शुदि १५ बुधे श्रीपवत्तणीस श्री **महिमलच्छि** योग्यं श्रीपार्श्वनाथात् शुभं भवतु ॥ छ ॥ पं. **धर्मरुचिभिः** लिखापितं ॥ पठनार्थं प्रं० श्री **महिमलछि पठनार्थं** ॥ छः ॥

## श्री० जि० चा० सू० सं० ज्ञा० भं० बिकानेर.

**श्रीसंग्रहणीवृत्तिः** प्र. १२४

श्री**मलधारि** श्री**हेमचंद्र** सूरीकृत संग्रहणी समाप्तः ॥ सं. १५२४ वर्षे **श्रीमदहम्मदनाम्निदुर्गे**ऽलेखि भद्रं भूयात् शश्वपदध्येत्रध्यापकयोः ॥ छ ॥

## श्री० मु० वि० शा० सं० छाणी.

**श्रीविमलनाथचरित्रम्** प्र. १२५

संवत् १५२४ वर्षे कार्तिक शुदि नवमी शुक्रे श्री **देवड पत्तनात्** ॥ उपकेश ज्ञातीय साह श्री **सामल** भार्या संघविणि श्री **यशोदेवि** तत् पुत्र धर्म शिरोमणि साह श्री **राघव** पुन्यार्थं सप्तक्षेत्री धन वितरणार्थे श्री विमलनाथचरित्रं लेखितं ॥ शुभं भवतु ॥ चिरं नंद्यात् पुस्तकं ॥

## श्री जैनसंघ ज्ञानभंडार पाटण.

**श्री उपदेशमाला** प्र. १२६

संवत् १५२५ वर्षे चैत्र शुदि २ बुधे अद्येह **वावडी** ग्रामे **पिप्पलाचार्य** भ० श्री**कनकप्रभसूरिणा सपरिवार** ॥

## श्री. नि. वि. जी. मणि. पुस्त. चाणस्मा.

**श्री उपदेशरत्नकोशः** प्र. १२७

लिखितः श्रीमति **अहम्मदाबाद** नगरे सं. १५२५ वर्षे श्राविका **नेताइ** भणनार्थम् ।

## श्री. वाडी पार्श्वनाथजी ज्ञानभंडार. पाटण.

**श्री कल्पपंजिका** प्र. १२८

संवत् १५२५ वर्षे भाद्रवा वदि १० रवौ । श्री **पत्तन** वास्तव्य उदीच्य मंत्री **धना** लिखितं ।

## श्री वाडी पार्श्वनाथजी ज्ञानभंडार पाटण.

**श्रीयोगशास्त्रः** प्र. १२९

प्रशस्तिः ॥ इति द्वादश प्रकाश विवरणं ॥छ॥ पं. **चरणसाधु**गणिना लिखितं **सं. १५२५** मार्ग. शु. १० गुरौ ॥

## श्री. नि. वि. जी. मणि. पुस्त. चाणस्मा

**श्रीसिद्धांतवांचना** प्र. १३०

इति वाचनाचार्याणां श्री सिद्धांत वाचना संपूर्णः ॥ १ ॥ सं. १५२५ वर्षे फाल्गुन शुदि दशम्यां लिखिता ॥ श्री रस्तु ॥ श्रीः ॥ **परम** गुरुश्री **आणंदविमलसूरि** शिष्य पं. श्री **धनविमलगणि शिवविमल** पठनार्थं ॥

## साध्वी श्री पुण्यश्रीजी ज्ञानभंडार जयपुर.

**आवश्यकसूत्रम्** प्र. १३१

संवत् १५२६ वर्षे पोस वदि ८ आदितवारे उत्तरार्के श्री **बहादुरपुरे** बृहद्गच्छीय **तपे** श्री **मुनीश्वर**सूरिशिष्य वा० श्री **भद्रमेर** तत्शिष्य वा० **मनोदय**शिष्येण मु. **जयकेशरेण** लिखितं॥ श्री **काकरियागोत्रे** सा० **सीहा** पुत्र सा० **सुदयवच्छ** भार्या श्राविका पुण्यप्रभाविका **हेमी** पठनार्थं लिषितं श्रीआचंद्रार्कं नंद्यात् ॥छ॥ भग्न पृष्टि..............परिपालयेत् ॥

## श्री जैनसंघ ज्ञानभंडार पाटण.

**श्रीअंगविद्या** प्र. १३२

संवत् १५२७ वर्षे आश्विन वदि ७ सप्तमी रवौ लिखितं श्री **अणहिलपुर पत्तने** ॥ शुभं भवतु ॥ श्री सीमंधर स्वामिने नमः ॥

अस्ति स्वतिकरं श्रीगूर्जरधरणीसुलोचनाकारं ।
**अणहिल्लपाटकं** पुरमपरपुरप्रवरशृंगारं ॥ १ ॥

सौधश्रेणिमनोहरे प्रतिपदं प्रासादशोभावरे
श्रीमत् श्री **अणहिल्लपाटकपुरे** पुण्यैकरत्नाकरे ।

श्री **श्रीमाल** विशाल वंशतिलकः प्रौढ प्रतिष्ठास्पदं
जातः श्री **मदनः** सहर्षवदनः साधुः सदा नंदनः ॥ २ ॥

तदंगजो **विश्रुत**नामधेय स्त्रैलोक्यलोकाद्भुतभागधेयः ।
बभूव भूवल्लभरूपधेयः श्री **देवसिंहः** स्वकुलैकसिंहः ॥ ३ ॥

तत्सुतः सकल विश्व विश्रुतः संघभक्तिगुरुभक्तिसंयुतः ।
धीरिमादिकगुणैरलंकृतः शोभते **सरवणाभिध** स्ततः ॥ ४ ॥

तस्य शीलगुणनिर्म्मलगात्रं सत्कलत्रगुणपात्रं ।
आदिमा शुभति तत्र **हि टीलु** श्रीपु रत्नमपरा खलु लक्ष्मीः ॥ ५ ॥

असूत सूनुद्वयमद्वयश्रीनिकेतनं सा समये तदाद्या ।
आद्यः सदाचारपरः **सदा**ख्यो **हेमा**भिधो हेमसमो द्वितीयः ॥ ६ ॥

दीनेषु दानं स्वजनेषुमानं पात्रेषु वित्तं सुकृतेषु चित्तं ।
तदा तदाद्यः सुसदा ददानः सदाभिधः कं न चमत्करोति ॥ ७ ॥

**शत्रुंजयाद्रौ गिरिनार**शृंगे रङ्गेण यात्रां किल यश्चकारः ।
परोपकारैकपरायणश्रीः श्रीमान् **सदा**ह्वानसुधीः सुधीरः ॥ ८ ॥

कल्याणकत्रयविहारविशालभद्रप्रासादपुण्यसफलीक्रियमाणवित्तः ।
श्रीपातसाहमुहिम्मुंदसभासुमान्यः सोऽयं सदाभिध सुधीः समभूत् वदान्यः ॥९॥

यस्याभंगुरभाग्यभंगिसुभगत्यादत्त
वरत्णाख्यां श्री **महिम्मदाभिध** सुरत्राणः स्वयं सोत्सवं ।
दुःप्रापात्र कणेपि यो वसुवियत्तिथ्यंकिते वत्सरे (१५०८) ।
सत्रागारममंडयच्च वसुधाधारः कृपासागरः ॥ १० ॥

अपरकलत्रं श्री **अहिम्मदाबाद** नगर वास्तव्यः ।
गुरुसेवाकरणरतिर्देवाकः पुण्यहेवाकः ॥ ११ ॥

तज्जाया लज्जायाः सदनं वदनेन विजितरजनिकरा ।
**देवश्री** देवश्रीरेव श्रीकारणं जयति ॥ १२ ॥

तस्यास्तनूजस्त्रिजगति शुभति श्री **अमरदत्ताख्यः** ।
श्री**हेम**सुतः सुचिरं जयति जगज्जीव**जीवाकः** ॥ १३ ॥
तस्य प्रशस्याऽजनि मुक्तमाया जाया **रमाई**रिति नामधेया ।
एवं परीवार विराजमानो मानोज्झितो राजति **देवराजः** ॥ १४ ॥
अनेन जैनागमभक्तिभाजा राजादिमान्येन धनीश्वरेण ।
वस्वग्निबाणक्षितिमानवर्षे (१५३८) हर्षेण **देवाभिध**साधुनात्र ॥ १५ ॥
श्रीमत्तपागणेंद्र **लक्ष्मीसागरा**ह्वसूरीणां ।
श्री **सोमजयगुरूणा**मुदेशाल्लेपितः कोशः ॥ १६ ॥ युग्मं ॥
चित्कोश चिंताकरणे सुधीरैः परोपकार प्रधनप्रवीणैः ।
गणीश्वरैः श्री**जयमंदिरा**ह्वर्भक्त्या भृशोपक्रम एष चक्रे ॥ १७ ॥
विबुधै र्वाच्यमानः शोध्यमानः सुबुद्धिभिः ।
ज्ञानकोशश्चिरं जीयादाचंद्रार्कं जगत्त्रये ॥ १८ ॥
॥ इति प्रशस्तिः समाप्ता ॥

## श्री. मु० वि० शा० सं० छाणी.

**श्रीजंबूद्वीपप्रज्ञप्तिसूत्रम्** प्र. १३३

संवत् १५२७ वर्षे आषाढ वदि ५ पंचमी रवौ लिखितं श्री **अणहिलपुर** पत्तने

## श्री जैन आनंद पुस्तकालय भं० सुरत.

**श्रीसुकुमालस्वामिचरित्रम्** प्र. १३४

संवत् १५२७ वर्षे **गिरिपुरे** राजाधिराज राउल श्री **सोमदास विजयराज्ये** श्रीमत् **काष्ठासंघे नंदीतटगच्छे विद्यागणे** भट्टारक **श्रीरत्नकीर्ति** अन्वये भट्टारक श्री **लखमसेन** तत्पदे स्वदेस परदेस विख्यात मानमंडलाचार्य भट्टारक श्री **अमासिनदेवान्** तत् शिष्य **ब्रह्मवीरमपंडित** देवा छात्र**वेलाउदास**हितान् ॥ ॥ छ ॥

## पं. वी. वि. सं. ज्ञानभंडार अमदावाद.

**श्रीनेमिनाथचरित्रम्** संस्कृत प्र. १३५

संवत् १५२७ वर्षे चैत्र मासे सुदि द्वितीयायां तिथौ शनिवासरे पुस्तक लखिता । श्री। छ । श्री **ब्राह्मणगच्छीय**पट्टालंकार **श्रीशीलगण**सूरी तत्पट्टे श्री **जगत्सूरि** तत् शिष्य **सुपद्दर्षमतिकेन**

पुस्तिका लिखिता । संपूर्णा ॥ पुस्तकं लिखितं संपूर्ण प्रतिः । यादृशं.... .... ॥ १ ॥ इदं पुस्तकं सुपूज्याय गुरुवे दत्तं परमगुरु श्री **आनंद विमलसूरि** शिष्य पं० श्री **धनविमल** गणि शिष्य.... विमल पठनार्थं । सादाशीवलाभार्या बाइ मुरुसुत **माहमहिसकरणेन** भंडारे गृहीत्तणुत**वर्द्धमान शांतिदास** परिपालनार्थं । प्रति भंडारनी आपी ए पाछली लीधी.

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीआवश्यकनिर्युक्तिः** प्र. १३६

संवत् १५२८ वर्षे श्री **स्थंभतीर्थ नगर**वासी श्री श्रीमाल ज्ञाति शृंगार सा० **चांपा** भा० **तिलकाइ** पुत्र सा० **फरिसराम** भार्यया श्रा० **पूरीनाम्न्या** पुत्र सा० **देवादि** प्रमुख कुटुंबयुतया श्री ज्ञानभक्त्या श्रीआवश्यकसूत्रं लेखितं निज श्रेयसे ॥ श्री तपागच्छाधिराज श्री **लक्ष्मीसागर-सूरि**राजानां विहारितं विबुधवारे वाच्यमानं चिरं जीयात् ॥ श्रीः ॥

## श्री वाडीपार्श्वनाथजी ज्ञान भंडार पाटण.

**श्री उपदेशमाला वृत्तिः** प्र. १३७

संवत् १५२८ वर्षे मार्गशीर्ष मासे । श्रा **पत्तन नगर** मध्ये श्री **खरतर गच्छे** श्री **जिनभद्र सूरि** पट्ट पूर्वाचल श्री **जिनचंद्रसूरि** तत्पट्टे श्री **जिनसमुद्रसूरि**--श्री **जिनहंससूरि**--तत्पट्ट पूर्वाचल विजयमान श्री **जिनमाणिक्यसूरि** राज्ये । श्री **पत्तन वास्तव्य भणशाली** गोत्रे भ० **मंडलिक** पुत्र **कीर्तिपालादि** सपरिकरेण स्वपुण्यार्थं श्री उपदेशमाला वृति दौघट्टी मुंचिता भांडागारे । वाच्य-माना साधुगणैः चिरं नंद्यात् ॥ शुभं भवतु ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीलक्षशुद्धिः** प्र. १३८

सं० १५२८ वर्षे सीरोह्यां लिखिता **पद्ममंदिर** मुनिना.

## श्री नीतिविजयजी जैन ज्ञान भंडार खंभात.

**श्रीयोगशास्त्रम्** प्र. १३९

संवत् १५२९ वर्षे मार्ग शिर्ष मास द्वितीया शुक्ल वार सोमे. गुर्जरदेशे लपिते॥**देवकावाडा** स्थाने **आगमगच्छे** श्री **अमररत्न** सूरि प्रसादात् पं **घांमु** साधु **मेर** वाचनार्थे लिपापिता अष्ट प्रका-शिका लिखित ॥ सुभं भवतु ॥ मांगल्यं च ॥

## श्री जैन सं० ज्ञा० भं० पाटण.

**श्री शीलोपदेशमाळा** प्र० १४०

संवत् १५२९ वर्षे कार्तिक वदि शनिवारे नवमी दिने श्री तपागच्छ नायक भ० प्रभुश्री पं. **रत्नशेखरसूरि** तत्पट्टालंकारहार विजयमान तपागच्छनायक श्री पं. **लक्ष्मीसागरसूरि** शिष्य **शिरोमाणिक्य** पं. **जिनमाणिक्य** गणि शिष्य **अनंतकीर्ति गणिना** लिखितं। सं. **गदा** भार्या सं० **सासू** पठनार्थं.

## श्री० जै० आ० पु० सुरत.

**श्रीसंग्रहणीसूत्रम्** प्र. १४१

संवत् १५२९ वर्षे आसो वदि द्वितीयायां गुरुवारे **धनवाटकग्रामे** पं० **सोममंगलगणि**-शिष्य **श्रुतकमळगणिना** लिखितं। परोपकाराय। **लावण्यप्रभगणि** पठनकृते ॥ श्रीः ॥ शुभं भवतु श्रीश्रमणसंघस्य ॥ श्रीः ॥

## श्री० जै० आ० पु० सुरत

**श्रीसुकुमालस्वामिचरित्रम्** संस्कृत. प्र. १४२

सं० १५२९ वर्षे आसो वदि ३ गुरौ श्री **खेडज्ञातीय** त्रिवाडी **देयत्तज** लिखितं शुभं भवतु, कल्याणमस्तु लेखकपाठकयोः ॥ छः ॥ छ ॥ छ ॥ छ ॥ छ ॥

## श्री. जै. सं. ज्ञा. भं. पाटण.

**श्रीआवश्यकनिर्युक्तिः** प्र. १४३

सं० १५३० वर्षे मार्गशीर्ष शुदि सोमवारे प्र० **श्रीलक्ष्मीसुंदरिगणिनी** शिष्यणया **सहजलब्धिगणिन्या श्रा०सारु** योग्य लिखितं ॥

## शेठ० ले० व० ज्ञा० भं० पाटण.

**श्रीकालग्रहणादि विधिः** प्र. १४४

संवत् १५३० वर्षे श्री पत्तने साधु **हर्षगणिना** स्वविलोकनार्थमलेखि.

## गां० गो० ना० सं० ज्ञानभंडार राजकोट.

**श्रीसिद्धांतविषमपद विवरणम्** प्र. १४५

सं. १५३० वर्षे फाल्गुण सुदि ५ शुक्रवारे श्री **स्तंभतीर्थे** वास्तव्य कोविदवृंदसेव्य श्री **उपकेश** वंशालंकारा विहित श्री शत्रुंजय यात्रा पात्रादि विभव व्ययकरण प्रमुखानेक धर्म्मकर्म्मप्रकार सा० **भोजा**सुत सा० **आसीधीरेण** भ्रातृ सा० **सचवीर** सुत सा० **जयचंद** प्रमुख समस्त कुटुंब परिवृतेन श्रीमद्वृद्ध**तपागच्छ** गगनांगण तरणीसमान कलिकालयुगप्रधान श्री **रत्नसिंह**सूरि पट्टवारिधिनिशामणि भूरिसूरि शिरोमणि श्री गच्छनायक प्रभु भ० श्री **ज्ञानसागर**सूरींद्राणामुपदेशेन श्रीसिद्धांतविषमपदविवरणं लिखाप्य श्री गुरुभ्यो अदायि बुधैर्वाच्यमानं चिरं नंदतु, भद्रं भूयात् ॥ श्री ॥

## मु. श्री हं. वि. सं. शास्त्र संग्रह. वडोदरा.

**श्रीत्रिभुवन(दीपक)भाषा** प्र. १४६

संवत् १५०१ वर्षे पोस वदि १ दिने आदित्यवारे लिखितः ॥ तपागच्छाधिराज श्री पूज्य श्री श्री श्री श्री श्री श्री **सोमसुंदरसूरि** शिष्य भट्टारक पुरंदर शृंगारहार चक्रचूडामणि श्री श्री श्री **सोमदेवसूरिशिष्य** मुख्य पूज्याराध्य पं० **सिद्धांतसमुद्रगणिशिष्य** मुख्य **कमलरत्नगणिना** श्री **मल्लारणा नगरे** पातशाह श्री **ग्यासदीन राज्ये** शुभं भवतु । श्रीरस्तु ॥

## श्री. जैन. सं. ज्ञा. भं. पाटण.

**श्रीयोगशास्त्रम्** प्र. १४७

संवत् १५३२ वर्षे मागसिर वदि ६ दिने शनिवारे अश्लेषा नक्षत्रे श्री **मंडपदुर्गनगरे**ऽलेखि ॥ चिरं नन्दतु ॥

## गां० गो० ना० सं० ज्ञानभंडार राजकोट.

**श्रीश्रावकप्रतिक्रमणसूत्रम्** प्र. १४८

संवत् १५३२ वर्षे कार्तिक सुद १५ सोमवारे अद्येह श्री **जाउर** नगरे श्री **सोमदेवसूरिराज्ये** वा० श्री **विशालकीर्ति** वाचनार्थे मुनिवर **सप्तशरेवं**रत्यि शेखरेणी लिपि ॥ छ ॥ श्री अस्तु ॥ यादृशं पुस्तकं..................न दीयते ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीआवश्यकनिर्युक्तिः** प्र. १४९

संवत १५३२ **वर्षे** । आषाढ वदि १० सोमवारे । श्री **बहुद्रव्यपुरे** श्रीमो**नर्षानराज्ये** । श्री **बृहद्**गच्छे पूज्य म० श्री ३ **मुनीश्वरसूरि**शिष्य वा० श्री **भद्रमेरु** तत शिष्य वा० श्री **मनोदय** तत शिष्य मुनि **जयकेशरेण** लिलिखत स्ववाचनार्थं । भद्रमनेकान्ताय.

## श्री० वि० वी० सू० सं० ज्ञा० भं० राधनपुर.

**श्रीदर्शनशुद्धिप्रकरण वृत्तिः** र. नं, ३०२१ प्र. १५०

संवत् १५३२ वर्षे ॥ आश्विन मासे ॥ **श्रीमंडपदुर्गे** चित्कोशे ॥ श्री खरतरगच्छे ॥ श्री **श्रीजिनभद्रसूरि** पट्ट पूर्वाचलालंकरण तरणतर तरणिसांद्र श्री **जिनचंद्रसूरि** विजयराज्ये ॥ श्री **सिद्धांतरुचि** महोपाध्याय शिष्य **विजयसोमगणि** साहाय्येन श्रीमालज्ञातीय ठकुरगोत्रे **सं० जनता** भार्या **हीमी** सुतेन श्री जिनप्रासाद प्रतिमा आचार्यादि पद प्रतिष्टा श्री तीर्थयात्रासत्रागाराद्य गण्य पुण्यपरं पराय विक्रीयमाण स्वजन्मनानि स्वभुजार्जित मुकल द्रव्य व्युह्व्यय लेखित सकल श्री सिद्धांतेन सुश्रावक सं० **श्रीमंडनेन** भार्या **लीलादे** पुत्र । सं० **छीमराज सं० जानु पु० वीना** प्रमुख सकल कुटुंब परिवार परिवृतेन दर्शन शुद्धि प्रकरणवृत्तिर्लेखिता **श्री पत्तने** श्री वाच्यमानं चिरं नंद्यात् ॥ श्रीः ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीप्रश्नशत वृत्तिः** प्र. १५१

सं० १५३२ प्रथम फा० वदि ५ गुरौ **श्री जयप्रभसूरि** शिष्य **यशस्तिलकेनालिखि** ॥

## श्री. जैन. आ. पु. सुरत.

**श्री सामाचारी (खरतरीया)** प्र. १५२

संवत् १५३२ वर्षे अश्वन मासे । **श्रीमंडप दुर्ग** चित्कोशे ॥ श्री खरतरगच्छे श्री **जिन-भद्रसूरि पट्ट** पूर्वाचलालंकरण तरुण तर तरणि सांद्रश्री **जिनचंद्रसूरि** विजय राज्ये श्री **सिद्धांतरुचि** महोपाध्याय शिष्य **विजयसोमगणि** साहाय्येन श्रीमाल ज्ञातीय ठकुरगोत्रे **सं० जयता** भार्या **हीमी** सुतेन श्री जिन प्रासाद प्रतिमा आचार्यादिपद प्रतिष्टा श्री तीर्थयात्रा सत्रागाराद्य गण्य पुण्य परंपरा पवित्री क्रियमाण स्वजन्मनानिज स्व भूजार्जितमुकल द्रव्य व्यूह व्यय लेखित सकल श्री सिद्धांतेन

सुश्रावक सं० **मंडनेन** भार्या **लीलादे** पुत्र सं० **षीमराज** सं० **जाउ** प्रमुख सकल कुटुंब परिवार परिवृतेन ॥ श्री ॥ **श्रीपत्तने** ॥ वाच्यमानं चिरं नंद्यात् ॥

## आ. श्री. वि. मे. सू. सं. ज्ञा. भं. अमदावाद.

**श्रीआवश्यक सूत्रम्** प्र. १५३

संवत १५३२ संवछर प्रवर्तमाने पोस मासे सुकल पक्षे षष्टी दिने सुद वासरे लिखिता श्री **मद्रेसुलि**ग्रामे श्रीमत्ततपागच्छ नायक श्री श्री श्री श्री श्री श्री श्री **सोमसुंदर**सूरिपाटप्रभाकर श्री **मुनिसुंदर**सूरि श्री **जयचंद्र**सूरि श्री **सोमजय**सूरि चिरं जयतुं पंडित शिरोमणि पं. **सत्यहंस**गणि तच्छिष्य पंडित शिरोरत्नांमल पं. **धर्ममंगल**गणिभिर्लिखापिता ॥ छ ॥ शुभं भवतु ॥ श्री श्रमण-संघस्य श्रीरस्तु ॥ मंगलं भूयात् ॥ छ ॥

## आ० श्री० वि० मे० सूरि० सं० ज्ञा० भं० अमदावाद

**श्रीपुष्पमाला प्रकरणम्** प्र. १५४

प्रशस्तिः ॥ इति पुष्पमाला प्रकरणं समाप्तं ॥ संवत् १५३२ वर्षे पोस सुदि ३ रवौ ॥ **मालवक**देशे ॥ **उज्जयिनी** नयरे पं० **सूररत्न** गणि लिखापितं ॥ लेखक नाथालिषितं ॥ यादृशं पुस्तकं दृष्ट्वा.............................................. ..ममदोषो नदीयते ॥ १ ॥ तैलाद रक्षे.................................................................................................

......................एवं वदति पुस्तिका ॥ २ ॥ शुभं भवतु ॥ कल्याणमस्तु ॥ श्रीः ॥ श्रीः ॥ ॥ श्रीः ॥ सर्वग्रंथाग्रं ३२२७ प्रमाणं ॥ संपूर्ण.

## आ० श्री० वि० मे० सू० सं० ज्ञा० भं० अमदावाद.

**श्रीमलयासुंदरी चरित्रम्** प्र. १५५

संवत् १५३३ वर्षे फागुण सुदि ८ रवै श्री **पत्तन** वास्तव्य**नादीनागर** जाती ठ। महं **विश्वनाथ** सुत **लक्ष्मीधर** लिषितं.

## श्री जैं० सं० ज्ञा० भं० पाटण.

**श्रीयोगशास्त्रद्वादशप्रकाशाः** प्र. १५६

सं० १५३३ वर्षे वैशाष सुदि सप्तम्यां भूमे श्री **मंडपमहादुर्गे** आचार्य **विश्वनाथ** लिखितं संपूर्ण ॥ श्रीरस्तु ॥ श्रीसंघप्रसादात् शुभं भवतु ॥

## गां० गो० ना० सं० ज्ञा० भं० राजकोट

**श्रीषड्दर्शन समुच्चयः** प्र. १५७

संवत् १५३३ वर्षे शाके १३९८ प्रवर्तमाने कार्तिक सुदी १ प्रतिपदा शुक्रवासरे स्वस्ति नक्षत्रे आयुष्माम्नाम योगे श्री **ढिल्यां** सुलित्राण श्री**बहलोलसाहिविजय**राज्ये श्री बृहद्गच्छे वादींद्र श्री **मुनीश्वर**सूरि संताने वा० संताने वा० श्री मुनि **कनकशिष्य** मुनि **मलयहंसे**ऽ्यलेषे ॥ छ ॥ श्री शुभं भूयात् ॥ श्री **विजयसिंहसूरिशिष्य रुषेता** ॥

## पं० ला० वि० सं० ज्ञानभंडार. राधनपुर.

**श्रीकाव्यकल्पलता कवि(शिक्षा)वृत्तिः** प्र. १५८

संवत् १५३४ वर्षे आसो वदि १३ रवौ ॥ अद्येह श्री **गिरिपुर राउलश्रीसोमदास** विजयराज्ये ॥ न ॥ **गदाधीश** लिखिता ॥ छ ॥ एवं सर्व ग्रंथाग्रं. ३३५७ ॥

## प्र. श्री. कां. सं. शा. सं. छाणी.

**श्रीनिगोद षट्त्रिंशिका सावचूरिः** प्र. १५९

प्रशस्तिः इति सूक्ष्मबादर निगोद गोलकावगाहनाविचारः ॥ समाप्तः संपूर्णः ॥ संवत् १५३४ वर्षे कार्तिक शुदि ४ दिने लिखितः पूज्याराध्येय पं. **शुभवीर**गणि शिष्य **सोमसमुद्र**गणिना ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीभुवनदीपकविवरणम्** । प्र. १६०

संवत १५३४ वर्षे वैशाष मासे कृष्णपक्षे द्वितीयायां तिथौ शनिदिने महं **गोपाल** लिखितमिति ॥

## पं. ला० वि० सं० ज्ञानभंडार राधनपुर

**श्रीअनेकार्थध्वनिकोशः** प्र. १६१

संवत् १५३५ वर्षे ॥ वसंते चैत्र मासे शुक्ल द्वादश्यां शनौ ॥ **विश्वनाथेनेयं** अनेकार्थ ध्वनिमंजरी लिषिता ॥ श्रीः ॥ छ ॥

## श्री वाडीपार्श्वनाथजी ज्ञानभंडार पाटण

**श्रीसप्तपदार्थी** प्र० ७३२

संवत् १६७५ वर्षे पौषमासे सितेतरपक्षे अष्टम्यां तिथौ लिखिता । श्रीमत्तपागच्छे भट्टारक श्री ३ **विजयतिलक**सूरिराज्ये पंडितोत्तम पं. श्री **देवविजयगणि**शिष्य पं. **मानविजयेन** स्वशिष्यगणि**अमृतविजय**पाठनकृते ॥ श्रीरस्तु ॥

## आ० श्री. ज्ञा० वि० सू० सं० ज्ञानभंडार खंभात

**श्रीअंतगडसूत्रं मूलम्** प्र. ७३३

संवत् १६७६ वर्षे पोष सुदी २ सोमे पं. श्री**गुणहर्ष**गणिपत्कजभ्रमर पं. **लब्धिविजयेन** लिखितं श्रीअंतगडदशांगसूत्रं ॥ श्रेयसे ॥ श्रीरस्तु ॥

## श्री. जै० आ० पुस्त० सुरत.

**श्रीउत्तराध्ययनस्तबकः** प्र. ७३४

संवत् १६७६ वर्षे आश्विनमासे कृष्णपक्षे तिथौ चतुर्दशी वार रवौ ॥ **तिजारामध्ये** ॥ लिखितं पूज्य ऋषि श्री ५ स्थिवर **धर्म्मदासजी** शिष्येण लिखितं **गोपी** आत्मार्थं । शुभं भवतु । कल्याणमस्तु । श्रेयः ।

## पं० श्री० ला० वि० सं० ज्ञा० भं० राधनपुर.

**श्रीगजसिंहकुमारचरित्रम्** प्र. ७३५

संवत् १६७६ वर्षे ज्येष्ठ सुदि १० रवौ लिखितं श्रीतपागच्छधिराज भट्टारक श्री ५ **विजय-(देव) गणिजसविजयना**लिखितं । शुभं भवतु ॥ कल्याणमस्तु ॥ श्री ॥ श्री**वागडदेशे आघुइ** नगरे ॥ श्री ॥ श्री ॥

## श्री० मु० वि० सं० शा० सं० छाणी

**श्रीगौतमपृच्छावृत्तिः** प्र. ७३६

संवत् १६७६ वर्षे मिति ज्येष्ठ वदि ११ बुधवासरे लिखिता चेला **न्यायसागर**, नगर **तांतुटी** मध्ये । राजि श्री **मरजादसिंघजी** राज्ये । श्रीरस्तु ।

## श्री. जैन. सं. ज्ञा. भं. पाटण.

**श्रीदीवालीकल्पः** प्र. ७३७

लिखितो मु. **जयसिंहेन** ॥ **मेडतामध्ये** ॥ संवत् १६७६ मृग. वदि ६

## आ० श्री० ज्ञा० वि० सू० सं० ज्ञा० भं० खंभात.

**श्रीविजयचंद्रकेवलिचरित्रम्** प्र. ७३८

संवत् ९६७६ वर्षे मृगसिर सुदि ३ सोमे पंडित श्री **विनयसागर** तत्शिष्य **मुनिहेमसागर** लिखितं ॥ **श्रीआंभूस्थलमध्ये** ॥ कल्याणं भवतु ॥

## श्री० जैन सं० ज्ञा० भं० राधनपुर

**श्रीवैतालपचीसी** प्र. ७३९

संवत् १६७६ वर्षे साके १५४० प्रवर्त्तमाने माहमासे शुक्लपक्षे चतुर्थीदिने शुक्रवारे. एतत् पुस्तकं लिखितं। शुभं भवतु परोपकाराय॥ यादृशं.................. न दीयते ॥

## आ० श्री. वि० वी० सू० ज्ञा० मं० राधनपुर.

**श्रीजिनदत्तरासः** प्र. ७४०

इति ,, समाप्तः ॥ श्रीरस्तु ॥ राज **धन्यपुर**वास्तव्य श्रीआदिजिनचैत्यालये समस्त श्री संघपठनार्थं लिखितं सं. १६७७ वर्षे ज्येष्ठमासे कृष्णपक्षे लिखितं ॥ छ ॥ लेखकपाठकयोः श्रेयः। तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् । मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम् ॥

## श्री० मु० वि० शा० सं० छाणी.

**श्रीलघुसंग्रहणीसूत्रम्** प्र. ७४१

संवत् १६७७ वर्षे फागुण शुदि ८ सोम दिने श्री **दीपमध्ये** लिखापिता। शुभं भवतु ॥

## आ० श्री० वि० वी० सू० ज्ञानमंदिर राधनपुर

**श्रीविजयदेवसूरिगीतानि** प्र. ७४२

सं. १६७७ वर्षे पौषमासे शुद्धपक्षे अमावास्यां शुक्रवासरे **श्रीसूर्यपुर**महानगरे लिखितं सा. **केशव** तत्सुत सा० **अमरशी** पठनार्थं। इदं वाच्यमानं आ चंद्रार्कं चिरं जीयात ॥ श्लोक ४८॥

## श्री. मु० वि० ज्ञा० सं० छाणी.

**श्रीवृंदावनमहाकाव्यम्** प्र. ७४३

संवत् १६७७ वर्षे वैशाख सुदि पंचमीतिथौ गुरुवारे वाचनाचार्यश्री**समयसुंदर**सूरीश्वराणामंतेवासी पंडितोत्तमप्रवर श्री**धर्मगणि**वराणामंतेवासी पं० सुनि **मेरुमुनि** लिखिता प्रतिरियं ॥ **श्रीमूलत्राणकोट्टे** ॥ श्रीरस्तु ॥ यादृशं.....................न दीयते ॥ श्री **जिनकुशल**सूरिप्रसादात् लिखिता ॥ श्री शुभं भवतु ॥

## आ० श्री० वि० दा० सू० सं० ज्ञा० सं० छाणी.

**समवायांगसूत्रम्** प्र. ७४४

प्रशस्तिः ॥ इति श्रीसमवायांगसूत्र समाप्तं ॥ शुभं भवतु ॥ छ ॥ संवत् १६७७ वर्षे आषाढमासे कृष्णपक्षे ११ गुरुवासरे द्वीपमध्ये लिखितं ॥ श्रीरस्तु ॥ छ ॥ ग्रंथाग्रं. १६६७ ॥ सर्व ॥

## श्री० जै० सं० ज्ञा० चं० पाटण

**दशवैकालिकसूत्रम्** प्र. ७४५

संवत् १६७८ वर्षे श्री अंचलगच्छाधिराजपूज्यभट्टारकश्री**कल्याणसागर**सूरीश्वराणाम् । श्री**भूजनगर**वास्तव्यउपकेशज्ञातीय **लालण**गोत्र सा. **सांगाकेन** श्रीदशवैकालिकसूत्रं लिखापितं स्वश्रेयसे प्रदत्तं च ॥

## श्री वाडीपार्श्वनाथजी ज्ञा० भं० पाटण

**श्रीसामाचारी** प्र. ७४६

तपागच्छाधिराज भट्टारक श्री ५ श्री **विजयाणंदसूरि**राज्ये पं० श्री **देवविजयगणि**शिष्यपं० श्री० **गुणविजय**गणिशतपत्रचंचरीकशावोपमेन विनेयाणुना सुकीर्तिना **कीर्तिविजयको**विदेन लिखितेयं । स्वयं वाचनकृते । संवत १६७८ वर्षे वैशाखसितद्वितीयायां तिथौ बुधवारे **नाणानगरमध्ये** ॥

## श्री० जै० आ० पु० सुरत.

**श्रीसिन्दूरप्रकरणावचूरिः** प्र. ७४७

संवत् १६७८ अश्वयुगसितनवमीदिने । श्रीखरतरगच्छे । श्री श्री श्री **विमलोदयो-पाध्यायदिनेशानां** शिष्य पं० **महिमानिधानानां** विनेय**पूर्णमल्लेना**लेखि ॥

॥ गृहीता प्रतिरियं **सुगुणचंद्रेण मवालपुर**मध्ये **साजण**पार्श्वात् ॥

## मु. श्री. हं. वि. सं. शा. सं. वडोदरा.

**श्रीसिंहासनद्वात्रिंशिका** प्र. ७४८

संवत् १६७८ वर्षे आश्विनमासे शुक्लपक्षे ९मी तिथौ भृगुवासरे **मांडवीविं(ब)दरे** श्रीमदं-चलगच्छे पूज्य परम भट्टारक गच्छेश श्री ५ श्री **कल्याणसागर**सूरीश्वरविजयराज्ये तदाज्ञाप्रतिपा-लकोत्तमवाचनाचार्य वा० श्री श्री श्री श्री श्री **वीरचंद्र**गणि तच्छिष्य ऋ० **ज्ञानसागरेण** लिखितं ॥ ॥ छ ॥ शुभं भवतु ॥

## श्री. मु. वि. शा. सं. छाणी.

**श्रीउत्तराध्ययनसूत्रम्** प्र. ७४९

संवत् १६७९ वर्षे भाद्रवा सुदि ९ गुरौ श्री**मदंचलगच्छाधीश**श्री**कल्याणसागर-सूरीश्वरैः** प्रदत्तं । मुनि**लावण्यसागराय** । श्री **पत्तननगर**वास्तव्य वीरवंश सा **हीरजीकेन** लिखापितम् ॥

## श्री जैन आनंद पुस्तकालय. सुरत.

**श्रीकविकंठाभरणम्** प्र. ७५०

श्री**सिद्धिचंद्र**गणिना स्वपठनकृते लिखापितो ग्रंथः संवत् १६७९ वर्षे आसो सुद ५ रवौ लिखितं ॥

## आ. श्री. वि. मे. सू. सं. ज्ञानभंडार अमदावाद.

**श्रीदशवैकालिकसूत्रम्** प्र. ७५१

संवत् १६ आषाढादि ७९ वर्षे कार्तिकमासे शुक्लपक्षे पूर्णमासीतिथौ गुरुवासरे ॥ वा० **विवेकसागरगणि**लिखितं ॥

## पं० श्री० उ० वि० सं० शा० सं० पाणस्मा.

**श्रीविक्रमचरित्रम्** प्र. ७५३

संवत् १६७९ वर्षे आसोमासे कृष्णपक्षे सप्तम्यां तिथौ कविवासरे लिखितं मुनि **शंभू सुयंताख्येग** स्वयं वाचनार्थे। शुभं भूयात् ॥

## श्री० नि० वि० जी० म० पु० पाणस्मा.

**श्रीलघुसंग्रहणीबालावबोधः** प्र. ७५४

श्रीविक्रमार्कसमयात् खवसुकलानिधिकला (१६८०) प्रमितवर्षे।
श्री**अमरसरोवर**नगरे कार्तिकशुक्लत्रयोदश्याम् ॥ १ ॥
**जहांगीरशाही**राज्ये **खरतरजिनराज**धर्मसाम्राज्ये।
श्री**जिनदत्त**मुनीश्वरसंताने **शीलचन्द्र**गुरोः ॥ २ ॥

## आ० श्री० वि० ल० सू० सं० ज्ञानभंडार खंभात

**श्रीसूत्रकृतांगसूत्रम्** प्र. ७५५

संवत् १६८० वर्षे श्रावण सुदि ५ गुरौ श्री **सत्यपुर**नगरे पं. श्री ५ श्री**हर्षसोम**गणि-शिष्य पं. **जससोम**गणिभिः शोधिता। श्रीरस्तु। गणि श्री **हर्षविमलेश्च** ॥ कल्याणमस्तु ॥ श्री॥

## आ० श्री० वि० वी० सू० ज्ञा० मं० राधनपुर.

**श्रीअभिधानचिंतामणिः नाममाला** प्र. ७५६

श्री**खरतर**गच्छे श्री**जिनभद्र**सूरिशाखायां श्री**अमरमाणिक्य** शिष्य श्री**क्षमारंग**गणि तच्छिष्य-वाचनाचार्य श्री**रत्नलाभ**गणि तच्छिष्य **राजकार्ति**गणिना सं०१६८१ वर्षे आश्विनमासे भौमवासरे त्रयोदशी **कर्म्मवाट्यां** लिखिता श्री**वीरमपुरि**नगरे। **शुभं** भवतु। कल्याणमस्तु। चिरं नंदतु वाच्यमाना प्रतिरेषा ॥

## श्री. गो० ना० गां० सं० ज्ञा० भं० राजकोट.

**श्रीजीतकल्पबृहत्चूर्णिः** प्र. ७५७

लिखितं पंडित श्री**विद्याविजय**गणिशिष्य**नेमिविजयेन** लिपीकृता ॥ श्री**स्वर्णगिरौ** संवत **१६८१ वर्षे कार्तिक मासे सुक्ल पक्षे प्रतिपद्दिने ॥**

## श्री जैं० सं० ज्ञा० भं० साणंद.

**श्रीलघुआराधना** प्र. ७५८

संवत १६८१ वर्षे आसो मासे ॥ श्री **आगमगच्छे** ॥ पं० श्री**देवजी** तत्शि. ऋ. **वरसींघ**लिखितं ॥

## श्री. मु० वि० शा० सं० छाणी.

श्री**शब्दभेदनिर्देश**ः प्र. ७५९

इति शब्दभेदनिर्देशः लिखितो **वृद्धविजयेन** संवत् १६८१ वर्षे ।

## पं. श्री. प्र. वि. सं. ज्ञानभंडार. अमदावाद.

**हितोपदेशः** प्र. ७६०

संवत् १६८१ वर्षे कार्तिक वदि प्रतिपदिने रवौ भरण्यां व्यतिपाते श्री **अहम्मदावाद**-नगरे श्री**विजयदेवसूरिभिः मुक्तिसागरो** गच्छान्निष्कासितः, तस्मिन्नेव दिने **शांतिदास**साहाय्येन सागरनाम कुमतं प्रवृत्तं, तत्र प्रथमं सागरकुमते मूलं **मुक्तिसागरः** तदनु च संवत् १६८१ वर्षे प्रथमचैत्रे शुक्लनवमीदिने पुनर्वसुनक्षत्रे नवमरवियोगे गच्छभेदमपास्य श्री**अहम्मदावाद**-सकलवाचकप्रभृतियतिसमुदायेन सकलसंघेन सह महाडंबरपुरस्सरं सकलानेकजातीयवाद्य-निर्घोषपुरस्सरं भट्टारकपुरंदरश्री**विजयदेव**सूरीणां सागरकुमतनिवारणप्रोत्साहितमनसः श्री**विजयानंद**सूरयोऽहं शिष्योऽस्मीति वदतः पदकमलं प्रणेमुः ॥ छ ॥ अथ श्रीतपागच्छदिनकरः सागरकुमतवार्दलपटलरहितोऽधिकतेजास्वितां प्राप । तद्दिने श्रीशत्रुंजययात्रार्थं बहुसंघयुतेन समागतेन श्री**वस्तुपालतेजपाल**तुल्येन दानकल्पद्रुमसमानेन श्रीविजयदेवसूरीणां परमभक्तेन तपागच्छपरमधर्मानुरागिणा **सीरोहीवास्तव्येन शीरोहिदेशाधिपतिमं**त्रिमुख्येन **महं श्री तेजपाल**सकलसंघयुतेन निजाग्रहमाननमुदितचेतसां सर्वेषां भट्टारकश्रीसूरिवाचकपंडितसाधु प्रभृतीनां स्वर्णरूप्यादिनाणकैर्नवांगपूजाकरणेन श्रीफलप्रभावनाकरणेन च महानुत्सवश्चक्रे । गच्छभेदनिवारणतिलकं संघपतितिलकं चैकस्मिन्नेव वर्षे मं० तेजपालेन जगृहे,

धर्मतः सकलमंगलावली धर्मतः सकलसौख्यसम्पदः ।
धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदतो विधीयताम् ।

पं. **उदयचन्द्र**गणिवाचनार्थम्

## श्री० वि० ल० सू० सं. ज्ञानभंडार खंभात.

**चैत्रीपूर्णिमादेववंदनविधिः** प्र. ७६१

इति चैत्रीपूर्णीमादेववंदन ॥ १ ॥ संवत् १६८२ वर्षे **स्तंभतीर्थे** लिखितो वा० **उदय-सागर**गणिनेति भद्रं ॥

## श्री० जैन वि० ज्ञा० भं० अमदावाद्

**श्रीरूपसेनरासः** भाषा गूजराती प्र. ७६२

प्रशस्तिः । रूपसेनरासः । संवत् १६८२ वर्षे श्री**अचलगच्छे** । ऋ० **जीवराजलिपी-**कृता । श्री शुभं भवतु ॥

## आ. श्री० वि० मे० सू० सं० ज्ञान भंडार अमदावाद्

**श्रीअभिधानचिंतामणिवृत्तिः** प्र. ७६३

सं. १६६६ वर्षे शाके १५३१ प्रवर्त्तमाने आश्विनमासे असितपक्षे पंचमीतिथौ **अर्क-**दिवसे पश्चात्प्रहरे **जयतारणि**मध्ये लिखितं मुनि **कोरजी** लेखितं । शुभं भवतु.

## प्र० श्री० कां वि० सं० शा० सं० वडोदरा.

**श्रीकल्पसूत्रम्** प्र. ७६४

संवत् १६६६ वर्षे आश्विनमासे कृष्णपक्षे १तिथौ बुधवासरे **मंगलपुरे** वास्तव्य श्रो श्रीमा-ल्ज्ञातीय विप्र **शामलीयाकेन** हस्ताक्षराणि ऋषि **वेला** ऋषि **गोविंद** पठनार्थं । श्री शुभं भवतु ॥ यादृशं.....................न दीयते ॥

## श्री. जै. आ. पु. सुरत.

**श्रीनिघण्टुशेषः** प्र. ७६५

इति महोपाध्याय श्री ५ श्री**मुनिविजयगणि**शिष्य पंडितश्री**नेमिविजय**गणिशिष्य-श्री**विजयगणिना**लेखि निघण्टुशेषाख्यः संवत् १६६६ वर्षे शिवतातिरस्तु लेखकपाठकयोः ।

## श्री. जै. आ. पु. सुरत.

**श्रीपर्यंताराधना** प्र. ७६६

संवत् १६६६ वर्षे ज्येष्ठ वदि १३ शनौ लिखितं मोहो**लालजी** ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीप्रतिष्ठाकल्पः** प्र. ६६७

प्रशस्तिः ॥ इति प्रतिष्ठाकल्पसमाप्तमिति ॥ ग्रंथाग्र ५२५ ॥ छ ॥ संवत् १६६६ वर्षे ॥ फागुण शुदि ११ शुक्रे विप्र **सामलीया**केन हस्ताक्षराणि ॥

## श्री. जैनविद्याशाळा० ज्ञा० भं० अमदावाद.

**प्रश्नव्याकरणसूत्रवृत्तिः** प्र. ६६८

संवत् १६६६ वर्षे आसोसुदी विजयदशमीदशमीदिने श्री**जिनभद्रसूरिशाखायां** । श्रीवाचनाचार्य **हेमराज**गणिनां शिष्य पं० **लाभतिलक**मुनीनां शिष्य पं० **चारित्रकीर्ति**मुनिना पं० **सुखकीर्ति**मुनिना लिखिता प्रतिरियं शुभं भवतु । कल्याणमस्तु श्रीदेवगुरुप्रसादात् ॥ छ ॥

## आ० श्री० वि० नी० सू० सं० ज्ञा० भं० खंभात.

**श्रीमहिपालचरित्रम्** प्र. ६६९

संवत् १६६६ वर्षे पौषमासे शुक्लपक्षे सप्तम्यां तिथौ शनिदिने श्री**सौराष्ट्र**देशे **मंगलपुर**-मध्ये लिखितं । शुभं भवतु । श्रीरस्तु ॥ कल्याणमस्तु ॥ पंडित श्री **बुद्धिविजय**गणिशिष्य**लक्ष्मीविजय**पठनार्थं ॥ ग्रंथाग्रंथ २२२० ॥ श्री ॥ श्री ॥ श्री ॥

## आ० श्री० वि० मे० सू० सं० ज्ञा० भं० अमदावाद.

**श्रीकर्मस्तववृत्तिः** प्र. ६७०

ग्रंथाग्रं ३५०० ॥ सं.१६६७ वर्षे भादरवा सुदी ५ गुरुवारे पंडितप्रवर श्री**हर्षशीलगणि**-पं. श्री**ज्ञानसमुद्र**गणि ( पछी हरताल मारेली छे.... ..... )

## आ० श्री० वि० वी सू० ज्ञा० मं० राधनपुर.

**श्रीतंदुलवैकालिकप्रकीर्णकम्** प्र. ६७१

संवत् १६६७ वर्षे कार्तिकमासे शुक्लपक्षे अष्टम्यां तिथौ सोमवासरे श्री**स्थंभतीर्थे** श्राविका **जीवी अजाइ**केन लिखापिता साहश्री**रिषवदास**कस्य आर्प्पिता पुण्यार्थं वा परोपकारार्थं ॥श्रीः

## पं० श्री० उ० वि० ज्ञानभंडार चाणस्मा.

श्री**दशवैकालिक**सूत्रम् प्र. ६७२

स्वस्ति श्री संवत् १६६७ वर्षे फागुणमासे श्वेतपक्षे द्वादश्यां तिथौ गुरुपुष्ययोगे श्री-तपागच्छे श्री**विजयसेनसूरि**राज्ये ॥ आचार्यश्री**विजयदेवसूरि**यौवराज्ये च पंडितश्री**देवविजय-**गणिना । स्वश्रेयसे अष्टोत्तरशतप्रतिः लिखापिता तन्मध्या देषा चतुर्थी बुधैर्वाच्यमाना चिरं जयतु ॥ छ ॥ श्रीरस्तु ॥ कल्याणं भवतु ॥ श्रीः ॥

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

श्री**प्रश्नप्रबोधः** प्र. ६७३

संवत् १६६७ वर्षे श्रावण वदि १४ दिने । सोमवासरे । पंडित**विनयसागर**मुनिना-लिखितः कृतोऽपि ॥ छः ॥ श्री**दिल्लीनगरे** । श्री**जहांगीरपाति**साहिराज्ये ॥शुभं भवतु ॥श्रीरस्तु॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीप्रश्नव्याकरण**म् प्र. ६७४

संवत १६६७ वर्षे वैशाख वदि नवमी शनौ श्रीमालज्ञातीय साह **नेनसी** भार्या सुश्राविका **नवरंगदे** सुत सा० **धर्मदासइ** ए प्रति विहरावी **मालपुर**मध्ये गणि **वीरकुशलनइ** ॥

## मु० श्री० हं० वि० सं० शा० सं० वडोदरा.

श्री**अनिट्कारिका सद्वृत्तिः** प्र. ६७५

संवत् १६६८ वर्षे आषाढ वदि १४ दिने श्री**विक्रमनगरे** । महाराजाधिराज श्री**रायसिंहजी** विजयराज्ये श्रीबृहत्खरतरगच्छे । वा० **मुनिप्रभगणि**शिष्य **पं. हेमसिंह**लिखितं स्ववाचनार्थं ॥

## आ० श्री० वि० वी० सू० ज्ञा० भं० राधनपुर.

**श्रीअण्णायउञ्छकुलकम्** प्र. ६७६

संवत् १६६८ वर्षे वैशाख सुदि १० गुरौ पंडितोत्तम स. प. श्री ६ **पुण्यविमल**गणि-शिष्य पं. **मतिविमल**गणिनालेखि ॥

## आ० श्री० वि० वी० सू० ज्ञा० भं० अमदावाद्

**श्रीअंजनासतीरासः** प्र. ६७७

इति ,, संपूर्ण लिखितं **समानगर**मध्ये । संवत सोलसडसट्ठा वर्षे वैशाख सुदि दसमी गुरो । छ । गणि**शांतिकुशल**लिखितं ।

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीअंजनासुंदरी चोपाइ** प्र. ६७८

प्रशस्तिः ॥ इति श्री अंजनासुंदरी चउपइ संपूर्णः ॥ संवत् १६८३ वर्षे फागुण शुदि ३ गुरुवारे लिखिता.

## मु० श्री हं० वि० सं० शा० सं० वडोदरा.

**एकवीशस्थानप्रकरणं सस्तबकम्** प्र. ६७९

लिखितं ऋषि श्री पं. **उत्तमजी**तच्छिष्यजीवर्षिणा लिपीकृतं ॥ सं. १६८३ वर्षे कृष्णपक्षे प्रथम वान **महिम्न**पुरे लिपीकृतं । शुभं भवतु ॥ श्री ॥

## श्री० मु० वि० शा० सं० छाणी

**श्रीकलावतीरासः** प्र. ६८०

सं. १६८३ श्रावण शुदि २ भृगु दिने वास्तव्य श्री**दीवबंदिरे** लिखितं । शुभं भवतु ॥

## आ० श्री० वि० नी० सू० ज्ञा० भं० खंभात.

**श्रीहेमचंद्राचार्यकृतं व्याकरणम्** प्र. ६८१

लेखिता च श्री **पुण्यप्रधानोपाध्यायपुंगवैः** श्री**विक्रमपुरे** संवति १६८३ वर्षे विजयदशम्यां

प्रदत्ता च प्रशिष्य **विनयसागर**गणये स्वहस्तेन वाच्यमाना चिरं नन्दतादाचन्द्रार्कम् । श्रीरस्तु । श्री श्री श्रीपूज्यानां ज्ञानकोशे ज्ञानादिगुणवृद्धये न्यस्तं **क्षमाप्रमोदेन** हैमशब्दानुशासनम् ॥१॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

श्रीउत्तराध्ययनसूत्रम् प्र. ६८२

प्रशस्तिः ॥ इति श्रीउत्तराध्ययनानि समाप्तानि ॥ छ ॥ ग्रंथाग्रंथ २०९५ ॥ शुभं भवतु। लेखकस्य ॥छ॥ संवत् १६८४ वर्षे प्रथमाषाढ वदि २ बुधे श्री**राऽद्रहा**नगरे श्री**अंचलगच्छा**धिराज-श्री**कल्याणसागर**सूरीन्द्रैरुत्तराध्ययनसूत्रं वाचकश्री**रत्नसिंह**गणये पठनाय प्रदत्तमिति वाच्यमानं चिरं नंदतादिह भूतले ॥

## पं० श्री० उ० वि० सं० ज्ञानभंडार० चाणस्मा.

जीवविचारप्रकरणम् प्र. ६८३

संवत् १६८४ वर्षे ज्येष्ठ वदि ६ दिने ऋषि **जीवा** लिखितं ॥ श्रा० **नानी** पठनार्थम् ॥

## श्री० जै० आ० पु० सूरत.

श्रीसुयगडांगसूत्रवृत्तिः प्र. ६८४

संवत् १६८४ प्रमिते । माह सुदि पंचमीदिने । श्री**खरतरगच्छे**शयुगप्रधानश्री**जिन-चंद्रसूरि**वरपट्टप्रतिष्ठितश्री**जिनसिंहसूरि**पट्टप्रभाकरश्री**जिनराजसूरि**राज्ये ॥ **पत्तन**वास्तव्य**पारिषगो-त्रीय** साह **षीमराज** सुत **समरथ** सुत **रतनसी** भार्या **लाडकी**कुक्षिजातेन पा० **धरनजी** सुश्रावकेण सुयगडांगवृत्तिपुस्तकमिदं लेखितं ॥ शंकरस्स्याच्छंभुर्भगवान् ॥ श्रीः ॥

## आ० श्री० वि० मे० सू० सं० ज्ञा० भं० अमदावाद.

श्रीज्ञातासूत्रम् प्र. ६८५

संवत् १६८४ वर्षे पोष सुदि ६ दिने बुधवासरे चेला० **रवजी** लिखितं ॥

## श्री० मोहनलालजी ज्ञा० भं० सुरत.

श्रीज्ञातासूत्रम् प्र. ६८६

संवत् १६८४ द्वितीयश्रावण वदि ७ दिने श्री बृहत्खरतरगच्छे श्री**सहजरत्न**गणिवराणां शिष्येण वा० **उदयसागरेण** शिष्य **यशःकिर्त्ति**मुनेः पठनाय श्रीज्ञाताधर्मकथांगपुस्तकं लिखापितं

## श्री. जै. आ. पु. सूरत.

श्रीअर्थदीपिका प्र. ६८७

संवत् १६८५ वर्षे चैत्र सुदि २ सोमे अद्येह श्री **मंगलपुरे** लिखितं ॥ छ ॥

## श्री. मु. वि. शा. सं. छाणी.

श्रीउपदेशमाला प्र. ६८८

संवत् १६८५ वर्षे श्री**बाहडमेरु**नगरे श्री**खरतर**गच्छे आसू सुदि १ दिने वा० श्री**धर्म्म-मंदिर**गणि शिष्य पं० पं० **पुण्यकलशमुनि** लिखितम् । श्रा० **सारा** पठनार्थं ।

## श्री. आ. क. ज्ञा. भं. लींबडी

श्रीजंबूद्विपप्रज्ञप्तिवृत्तिः प्र. ६८९

संवत् १६८५ वर्षे शाके **१५५५** प्रवर्तमाने चैत्रमासे शुक्लपक्षे पंचम्यां तिथौ बुधवासरे श्री**राजनगर**मध्ये **पातसाहि** श्री**जाहांगीरविजय**राज्ये श्री**सागरगच्छे** पूज्य गच्छाधिराज श्री **सर्वदेव**सूरीशशिष्यसकलशास्त्रपारग पाठकचक्रचक्रवर्ति विद्वच्चूडामणि महोपाध्याय श्री .. गणि शिष्य विनयी अंतेवासी पं. **विद्यासोम**गणिना विलिखितं स्ववाचनार्थं ॥ श्री**चंद्रप्रभु**स्वामि-प्रसादात् श्रेयकल्याणमस्तु ॥ श्रीः ॥

## श्री शांतिनाथजी ज्ञानभंडार खंभात

श्रीदशवैकालिकसूत्रम् प्र. ६९०

इति दसवेआलिअसुअक्खंधो सम्मत्तो ॥ संवत १६८५ वर्षे फागुणसुदि २ दिने । पंडित शिरोमणि पंडित श्री**विजयचन्द्रगणि**शिष्यगणि**कल्याणचंद्र** लिखितं ॥ श्री **करयवाडा**ग्रामे ॥ शुभं भवतु ॥ कल्याणमस्तु ॥

## आ. श्री. वि. दा. सू. सं. शा. सं. छाणी.

श्रीपट्टावली प्र. ६९१

प्रशस्तिः ॥ इति श्री गुर्वावली वृत्ति संपूर्णा ॥ संवत् १६८५ वर्षे मार्गशीर्ष शुक्ल २

सोमे ॥ **मंगलपुर**वास्तव्य श्री**मालीज्ञातीय** लघुशाखायां वु० **सुरा** भार्या **गेणीसुत** वु० **पदम** भार्या **प्रेमलदे** तयोः सुपुत्र सद्धर्मचारि वु० **प्रेमजी**याख्येन स्वभुजोपार्जितवित्तेन श्रीकल्पकिरणावली पट्टावलीसमन्विता स्वश्रेयसे लिखापिता ॥ स्वपुण्यार्थं वाचनाय ॥ श्री**तपागच्छा**धिराजभट्टारक श्री **विजयदेव**सूरीश्वर आचार्य श्री **विजयसिंह**सूरीश्वरयोर्विजयराज्ये सकलपंडितशिरोमणि पं० श्री **दयाकुशल**गणि शिष्य पं० **भक्तिकुशल**गणिना प्रदत्ता वाच्यमाना चंद्रार्कं चिरं नंदतात् ॥छ॥छ॥

## श्री० जै० वि० शा० ज्ञा० भं० अमदावाद.

श्री**वंकचूलरासः** प्र. ६९२

सा० **कान्हा** पठनार्थं मुनि **गुणविजय** लिखितं संवत् १६८५

## श्री. आ. क. ज्ञानभंडार लींबडी

श्री**सूयडांगसूत्रवृत्तिः** प्र. ६९३

श्री संवत १६८५ वर्षे पोषमासे शुक्लपक्षे अष्टम्यां चंद्रवासरे लिखितं **राउल गोव्यंद** ॥

## श्री. मोहनलालजी ज्ञानभंडार सुरत

श्री**सामाचारीशतकम्** प्र. ६९४

संवत् १६८६ वर्षे चैत्र सुदि १ दिने श्री**विक्रमनगरे** श्री**बृहत्खरतर**गच्छाधीश्वर युगप्रधान श्री**जिनचंद्र**सूरिशिष्य उपाध्यायश्री**समयसुंदर**विरचितं सामाचारिशतकबीजं सम्पूर्णं ॥ शुभं भवतु ॥

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

श्री**पाक्षिकसूत्रम्** प्र. ६९५

संवत् १६८७ वर्षे । कार्त्तिक सुदि १० दिने ॥ श्री तपागच्छे ॥ श्री **विजयदेव**सूरीश्वरराज्ये ॥ पंडितश्री**ककमलविजय**गणिशिष्य पं. **कीर्त्तिविजयेन** लिखितं । साध्वी **हेमऋद्धि** शिष्यणी **कल्याणऋद्धि** पठनार्थम् । श्री**देवकुलपाटके** । शुभं भवतु ॥

## मु. श्री हं. वि. सं. शास्त्रसंग्रह. वडोदरा.

श्री**विधिशतकम्** प्र. ६९६

संवत् १६८७ वर्षे भाद्रवा सुदि १३ दिवसे ॥ बृहस्पतिवारे श्री **राधणपुरनगरे** ॥ लिखितं वा० **विनयवर्द्धन**गणिना ॥ साहसुश्रावकदोसी साह **रत्नपाल** पठनार्थं ॥ शुभं भवतु ॥

## श्री जैन आ. पु. सुरत

श्री**विशेषशतकम्** प्र. ६९७

मुनिवसुषोडशवर्षे(१६८७)गुर्जरदेशे च महति दुःकाले । मृतकैरस्थिग्रामे जाते श्री **पत्तने** नगरे ॥१॥भिक्षुकभयात्कपाटे जटिते व्यवहारिभि र्भृशं बहुभिः ।पुरुषैर्माने मुक्ते सीदति सति साधुवर्गेऽपि ॥२॥ जाते च पंचरजतैर्धान्यमणे सकलवस्तुनि महर्घ्ये । परदेशगते लोके मुक्त्वा पितृमातृबंधुजनान् ॥३॥ हाहाकारे जाते मारिकृतानेकलोकसंहारे । केनाप्यदृष्टपूर्वे निशि कोलिकलुंटिते नगरे ॥ ४ ॥

तस्मिन् समयेऽस्माभिः केनापि हेतुना च तिष्ठद्भिः । श्री **समयसुंदरो**पाध्यायैर्लिखिता च प्रतिरेषा ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी

श्री**शांतिनाथचरित्रम्** प्र. ६९८

प्रशस्तिः ॥ इति श्रीशांतिनाथदेवचरितं समाप्तमिति ॥ छ ॥ संवत् १६८७ वर्षे कार्तिक सुदि ७ सोमवासरे । शुभं भूयात् लेखकपाठकयोः ॥ कल्याणमस्तु ॥ श्रीरस्तु ॥ पूज्य परम पूज्य गच्छाधिराज तपागच्छमंडण भट्टारक श्री श्री श्री श्री **सोमविमलसूरि**शिष्य पंडितश्रेणि देसविदेसविख्यात यतिशृंगार पूज्य पंडित श्री श्री श्री **रत्नसोम**गणि गजेंद्राणां तच्छिष्यमुनि **विद्यासोम** लिखितं चे० **मांनसी मुढासा**ग्रांमे ॥ छ ॥ श्रीः ॥ छ ॥ श्रीः ॥ श्री रस्तुः ॥ छ ॥

## आ. श्री वि. ल. सू. सं. ज्ञानभंडार खंभात

श्री**संग्रहणीसूत्रचूर्णिः** प्र. ६९९

इति श्री संग्रहणीसूत्रं सम्पूर्णमिदं **वनमालिना**लेखि यतिनात्मपठनार्थं अब्द ( संवत्) १६८७ कार्तिकमासे शुक्लत्रयोदश्यां शौरिवासरे **भीमसेनपुरे** स्थिते सति शं भूयात् । श्रीरस्तु लेखकपाठकयोः ॥

## मुनि श्री हुकमविजयजी ज्ञानभंडार सुरत

**श्रीसंबोधसित्तरी** प्र. ७००

संवत् १६८७ वर्षे मागशिर सुदि ५ दिने पं. श्री ५ श्री **धनहर्षगणि** तच्छिष्य रा० **रत्नविजयेना**लेखि.

## श्री जैन विद्याशाळा ज्ञानभंडार अमदावाद्

**श्रीउपदेशमाळा बाळावबोधः** प्र. ७०१

संवत् १६८८ वर्षे कारतिक वदि ७ गुरौ श्री **वड़ोणनिपुर**नगरे पं० श्री **दर्शनविजय**-गणिचरणारविंदसेवकगणि**शिवविजय**लिखितं । शुभं भवतु । कल्याणमस्तु ॥

## श्री जैन विद्याशाळा ज्ञानभंडार अमदावाद्

**श्रीश्राद्धदिनकृत्यस्तवकः** प्र. ७०२

सं. १६८८ वर्षे आषाढ सुदि ५ शुक्रे लिखितं राउल **गोविंद** औदीच ज्ञातीय **वेगनपुर** वास्तव्यः ॥

## श्री जैन विद्याशाळा ज्ञानभंडार अमदावाद्

**श्राद्धदिनकृत्यस्तवकः** प्र. ७०३

संवत् १६८८ आषाढ सुदि १ सोमे लिखितं ॥ छः ॥ साध्वी श्री **सहिज**श्रीपठनार्थं.

## श्री संवेगी उपाश्रय ज्ञानभंडार सूर्यपुर

**श्रीउत्तराध्ययनसूत्रम्** प्र. ७०४

संवत् १६८९ वर्षे वैशाख वदि १० रवौ लिखितं स्वस्ति श्रीमत्तपागच्छे लघुशाखायां **श्रीस्थंभतीर्थ**वास्तव्य पं० **संतोष**तच्छिष्य चे० **भवानीदासेन** लिखितं श्री **सीरोहीनगरी**मध्ये ॥

## श्री. जैन विद्याशाळा ज्ञानभंडार अमदावाद

**श्रीनवतत्त्वस्तवक** प्र. ७०५

संवत् १६८९ वर्षे श्री **वाग्भट्टमेरौ** कारतिक वदि सप्तम्यां वार वा०श्री **धर्म्ममंदिर**गणिना-मंतेवासिना पं० **पुण्यकलशेन** लिपीचक्रे ॥ श्री ॥ साध्वी **ज्ञानसिद्धि** साध्वी **धनसिद्धि**पठनार्थम् श्रीरस्तु लेखकपाठकयोः नितराम् ॥

## श्री जै. आ. पु. सुरत

**श्रीशांतिनाथचरितम्** प्र. ७०६

संवत १६८९ वर्षे भाद्र वदि १३ रवौ सम्पूर्णोऽयं ग्रंथः॥ **दंतीपाटक**मध्ये । श्रीऋषभदेव-प्रासादात् ॥ छ ॥पाटे ॥ यादृशं ............

## श्री० हु० मु० सं० ज्ञा० भं० सूर्यपुर.

**श्रीउत्तराध्ययनवृत्तिः** प्र. ७०७

लिखिता चेयं संवत् १६९० वर्षे श्री**सीरोही**नगरवास्तव्येन वास्तोष्पतिस्तवनीय वास्तव-गुणालंकृतेन कृतसप्ताशीतितमवर्षे वर्षितपपरोलक्षनरोपकारेण कारितरत्नसानुसानूपमसानुशोभित-चतुर्मुखश्रीसुवर्णादिजिनमंदिरेण श्रीशत्रुंजयार्बुदादितीर्थयात्राविधापनतोषितचतुर्विधश्रीसंघदत्तकुशला-शीःपोषितयशोविभवसुंदरेण । स्वकीयसत्पुत्र **सं** । **कमा** । प० । **गुणराजादि** कुटुंबविराज ॥

## श्री० गो० ना० सं० ज्ञा० भं० राजकोट.

**श्रीगुणावलिः** प्र. ७०८

संवत् १६९० वर्षे आषाढमासे कृष्णपक्षे नवम्यां । तिथौ गुरुवासरे जोसी **गंगदास** लिखितं श्री**नागपुर**मध्ये । शुभं भवतु । यादृशं पुस्तकं............दोषो न दीयते ॥ बाइ **जसोदा** पठनार्थं शुभं भवतु । कल्याणं भूयात् ॥ श्रीः । श्रीः । श्रीः ॥

## मु० श्री० हं० वि० सं० शा० सं० वडोदरा.

**श्रीजंबूस्वामिचतुष्पदा** प्र. ७०९

संवत् १६९० आश्विन २ बुधवारे श्रीखरतरगच्छे श्री**राजकलशजी** ॥साध्वी **दयासुंदरीजी** चेलो **प्रभावती** लिखितं । शुभमस्तु ॥श्री**विरोज**मध्ये । लिखितं पातिसाह **जिहांगिर**राज्ये ॥कल्या-णमस्तु । शुभं भूयात्............

## श्री० जैन आनंद पुस्तकालय सुरत.

**श्री प्रदक्षिणा** ? । प्र. ७१०

संवत् १६९० वर्षे चैत्र सुद १२ रवौ लि० **राजकीर्त्तिकेन** ॥ ऋषिश्री**वैराग्यसागर**-पठनार्थं ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीविचाररत्नाकरः** प्र. ७११

प्रशस्तिः ॥ इति श्रीविचाररत्नाकरप्रशस्तिः समाप्ता ॥ समाप्तश्चायं ग्रंथः ॥ लिखितश्च पं० **विनयविजय**गणिना ॥ छ ॥

दर्शन-हिमकर—गगन—ग्रैवेयकसंख्यवत्सरे (१६९०) जातः ।
आश्विनसिततुर्यायां यत्नः सफलो गुरुमहिम्ना ॥ ३६ ॥
**श्रीकीर्तिविजय**वाचकविनेयलेशेन **कांतिविजयेन** ।
श्री**वटपद्रपुर**स्थितचित्कोपे प्रतिरियं मुक्ता ॥ १ ॥

## श्री० नि० वि० जी० म० पु० चाणस्मा.

**श्रीअंजनासतीरासः** प्र. ७१२

पंडितप्रवर पंडित श्री ५ श्री**विनयकुशलगणि**शिष्यगणि**कीर्तिकुशलेन** लिखितं स्वयं वाचनार्थं ॥ संवत् १६९१ वर्षे पोष वदि नवमीतिथौ गुरुवासरे ॥ **सिरसडी**मध्ये लिखितं ॥ श्री**शांतिनाथ**प्रसादात् ॥ लेखकपाठकयोः चिरं जीयात् ॥

## श्री. जैन विद्याशाळा ज्ञा. भं. अमदावाद.

**श्रीजीवविचारस्तवकः** प्र. ७१३

संवत् १६९१ वर्षे ज्येष्ठ सुदि २ दिने गुरुवासरे पंडित श्री ५ श्री**जयविजयगणि**शिष्य-गणि**देवविजय** ग. शिष्यमुनि**दीपविजयेन** लिखितं **धुडा**ग्रामे । शुभं भवतु ॥ कल्याणं भूयात् ॥ छ ॥ श्री ॥ श्री ॥ छ ॥

## मु० श्री० हं० वि० सं० शा० सं० वडोदरा.

**श्रीलोगस्ससूत्रम्** प्र. ७१४

संवत १६९१ वर्षे चैत्र सुदि ५ शुक्रे महोपाध्यायश्री**राजरत्नगणि**शिष्यमुनि**कीर्त्ति**-

**रत्न**लिखितं । शुभं भवतात् लेखकपाठकयोः । सा० **विधा** श्री **नीनी** सालणी श्रा० **लाछलदे** पुत्रीनी **सालणी हांसबाइ** पठनार्थं । यादृशं.....................

## श्री० नि० वि० जी० मणि० पु० चाणस्मा.

श्री**संग्रहणीसूत्रम्** प्र. ७१५

संवत् १६९१ वर्षे **द्वितीय**भाद्रपदमासे कृष्णपक्षे त्रयोदश्यां रवौ ब्रा० **चतुर्भोज** लिपीकृतं । शुभं श्रीः । **जेसलमेर**मध्ये **भणसाली सिवराज** आत्मज **नेनसी** पुस्तकधर्मार्थे लिखापितं मुनि-( न. ज ) **यविजय** पठनार्थं ॥ श्रीः ॥ छः ॥

## पं. श्री. प्र. वि. सं. ज्ञा. भं. अमदावाद.

श्री**उपासकदशांगसूत्रम्** प्र. ७१६

संवत् १६९२ वर्षे श्रावण शुदि ३ भोमे **अंजार**मध्ये लिखितं **शंभूजयंता**ख्येन पुण्यार्थं **इदं** शास्त्रं मुनि**धर्मशी**पठनार्थं । लेखकपाठकयोः शुभं भवतु ॥ कल्याणमस्तु ॥

## श्री उ० खा० जै. ज्ञा. मं० झींझुवाडा.

**श्रीदंडकस्तवः** प्र. ७१७

लिखितं **चन्द्रकीर्त्ति**गणिना संवत् १६९२ वर्षे ॥ छ ॥ श्री**अंचल**गच्छे ॥ पं. श्री**चेला**-गणिनइ श्राविका **कोडिमदेइ** विचारस्तवननी प्रति वोहरावी । **कंटालीयाग्रामे** वास्तव्य ॥

## श्री० नि० वि० जी० मणि पुस्त० चाणस्मा.

श्री**सारस्वतदीपिका** प्र. ७१८

संवत १६९२ वर्षे कारतिक सुदि १४ वार शुक्रे **सेरपुरा**मध्ये लिखितं ऋषि श्री ५ **कम्भाजीना** शिष्य तत् ऋषि श्री **पृथवीमल्लजी** पठनार्थं । ऋषि **मेघजी**सुत............शुभं भूयात् लेखकपाठकयोः । ग्रंथाग्रंथः ६८५० श्री ॥ श्री ॥ छ ॥ श्री ॥

## आ० श्री० वि० वी० सू० सं० ज्ञा० भं० राधनपुर

**श्रीआरामतनयकथा** प्र. ७१९

सं. १६९३ वर्षे आषाढ वदि **१३** बुधे लिखिता गणी **लालविजयेन वावि**नगरे। शुभं भवतु ॥ श्री ॥

## श्री जैन विद्याशाळा ज्ञा. नं. अमदावाद्

**उत्तमकुमारचरित्रम्** प्र. ७२०

संवत् १६९३ वर्षे माघसुदी ५ दिने लिखितं पण्डितश्री**लब्धिविजय**गणितत्शिष्य-मु० **धीरविजय**लिखितं **नवानगर**मध्ये स्वपठनार्थे गणिश्री**नेमविजय साणरी (?) हेमविजय** मु० **प्रेमविजयः** ॥ श्रीः ॥

## आ० श्री० वि० वी० सू० ज्ञानमंदिर राधनपुर

श्री**कल्पकल्पलतावृत्तिः** प्र. ७२१

महोपाध्यायश्री**गुणविजय**गणिविरचिता कल्पकल्पलतानाम्नी श्रीकल्पसूत्रलघुटीका संपूर्णा। श्रीरस्तु।

श्रीमत् श्री**गुणविजयो**पाध्यायपदाब्जचञ्चरीकेण।
**उदयविजये**न गणिना लिखितोऽस्याः पुस्तकः प्रथमः ॥ १ ॥

ग्रंथाग्रं ३१०० संवत् १६९३ वर्षे पोष वदि १ पुष्यार्के लिखितेयं श्री**राजनगरे**। त्रीणि सहस्राणि साधिकानि संभाव्यंते ॥ छ ॥ मूलकर्ता भद्रबाहुस्वामी ॥

## श्री. जैन संघ ज्ञान भंडार. पाटण.

श्री**नंदिसूत्रम्** प्र. ७२२

कोठारी**अमथा** लिखितं श्री**देशड**मध्ये सं० १६९३ वर्षे सरावण वद ८ दिने ॥

## आ० श्री० ज्ञा० वि० सू० सं० ज्ञा० भं० खंभात

**श्रीपरिशिष्टपर्व** प्र. ७२३

संवत् १६९३ वर्षे कारतिक सुदि ५ गुरौ पुष्यनक्षत्रे सकल भट्टारक प्रभु श्री **तपागच्छा-धिराज** परमगुरु श्री......... ,.......श्री**विजयाणंद**सूरीश्वराणां चरणसरसीरुहरेणुमकरंद-

लालसचंचरीकसमानगणिश्री**कनकविजय**लघुसहोदर स्व. श्रीगुर्वाज्ञादितेयलतालजजा ? सकलमनो-वांछितसुखफलकदंबकेन गणिगजेन्द्रगणिश्री**शांतिविजय**सहितेन तृतीयसहजातग० **शिवविजयाभि**-धानेन लिपीकृतः। स्वपरवाचनार्थं निर्जरार्थं च **देसूरिनगर्यां** ॥

## श्री० नि० वि० जी० मणि० पुस्त० चाणस्मा.

**श्रीप्रेमलासतीरासः** प्र. ७२४

संवत् १६९३ वर्षे **मागशिर** वदि १४ शुक्रे लिखितं ॥ छ ॥ पूज्य भट्टारक श्री श्री श्री श्री श्री श्री श्री **हीररत्न**सूरि तत् शिष्य गणेश श्री श्री श्री श्री **जसविमल** तत् शिष्य मुनि श्री **मानविमलेन** ॥ लिखितं पठनार्थं ॥ लेखकपाठकयोः कल्याणमस्तु ॥ १ ॥ शुभं भवतु। मंगल-मस्तु ॥ श्रीरस्तु ॥

## श्री जैन विद्याशाळा ज्ञानभंडार अमदावाद.

**श्रीविपाकसूत्रश्रुतस्कंधः** प्र. ७२५

संवत् १६९३ वर्षे मागशिर शुदि ९ थावरवारे लिखितं **आनंदसागर**। ग्रंथाग्रंथ १३५०।

## गां० गो० ना० सं० ज्ञा० भं० राजकोट

**श्रीगुणस्थानकविवरणम्** प्र. ७२६

संवत् १६९४ वर्षे माघमासे शुक्लपक्षे पंचम्यां तिथौ बुधवारे श्री **उदयपुरे** वा०श्री **ज्ञान-समुद्र**गणीनां ततशिष्यमुख्य पण्डित **ज्ञानराज** मुनीनां शिष्य मुख्य पं० **लब्धोदय** मुनीनां शिष्य-पं० **जसहर्ष** मुनि लिखितं। श्रीरस्तु ॥ कल्याणमस्तु ॥

## श्री० नि० वि० जी० मणि० पुस्तकालय चाणस्मा

**श्री उपदेशमालाबालावबोधः** प्र. ७२७

ग्रंथाग्रंथ १५०९। संवत १६९४ वर्षे फागण सुदि १० भौमे। तपागच्छाधिराज भट्टारक-प्रभु श्री श्री ५ **विजयानंदसूरि**विजयराज्ये सकलपण्डितसभाशृंगार प० श्री **धनहर्षगणि** शिष्य प० **रत्नविजये**नालेखि ॥

## श्री० वाडीपार्श्वनाथजी ज्ञानभंडार पाटण

**चातुर्मासिकव्याख्यानं (बालावबोधः)** प्र. ७२८

संवत् १६९४ वर्षे मागशीर्ष सुदि ५ शनौ श्री **पत्तनमध्ये** श्रीपूर्णिमापक्षे वाचनाचार्य वा० श्री**देवसुंदर**शिष्य**कल्याणसुंदर–लाभसुंदर–लब्धिसुंदरादि**वाच्यमानं चिरं **नंद्यात्** ॥ लेखितं मुनि **कल्याण**सुन्दरेण।

## श्रीमोहनलालजी ज्ञानभंडार. सुरत.

**श्रीप्रत्येकबुद्धकथा** प्र. ७२९

सकलपण्डितशिरोमणि पण्डित श्री ५ **सौभाग्यविजय**गणि तत्‌शिष्य गणि **बुद्धिविजय**-लिखितं । संवत् १६९४ वर्षे **राजनगरे** लिखितं आपकाजे पठनार्थं ॥

## श्री जै० आ० पुस्त० सुरत.

**श्रीप्रश्नव्याकरणसूत्रवृत्तिः** प्र. ७३०

सं० १६९४ कार्त्तिकसितपंचम्यां । श्री**स्तंभतीर्थ**वास्तव्य श्रीश्रीमालीवृद्धशाखीय । दो० **लहूया** । तद्‌भार्या **चंपाइ** । तयोः पुत्र दो० **सुमतिदास** दो० **कीका** दो० **केशव** । दो० **सुमतिदास** भार्या **सोभागदे** । तयोः पुत्र दोसी **जयकरणेन** । स्वबंधु दो० **कानजी** प्रमुख-कुटुंबयुतेन स्वीयकोशवृद्धये स्वश्रेयसे । ४५ आगमसूत्रवृत्तिपुस्तकं लिखापितं । तन्मध्ये दशमांगस्य वृत्तिरियं गृहीता । शुभं भवतु ॥

## मु. श्री हं. वि. सं. शास्त्रसंग्रह वडोदरा.

**श्रीप्राकृतनाममाला** प्र. ७३१

संवत् १६९४ वर्षे आसो वदि १४ दिने । श्रीमत्तपागच्छे भट्टारक श्री **विजयाणंदसूरी**श्वर-राज्ये सकलकोविदकोटीरहीर पंडित श्री**मानविजय**गणिशिष्य पं० श्री **अमृतविजय**गणितत्-शिष्य ग० **मुक्तिविजयेन** लिखिता स्ववाचनार्थं ।

## आ० श्री० वि० नी० सू० सं० ज्ञा० भं० खंभात

**श्रीभगवतीसूत्रम्** प्र. ७३२

श्री**स्तंभतीर्थे** वास्तव्य श्रीश्री**माली**ज्ञातीय **वृद्धशाखीय** दो० **लहुया** तद्‌भर्या बाइ **चंपाइ** तयोः पुत्र दो० **सुमतिदास** दो० **कीका** दो० **केशव** । दो० **सुमतिदास** भार्या **सोभागदे** तयोः पुत्र दो० **जयकरणेन** स्वबंधु दो० **कानजी**प्रमुखकुटुंबयुतेन ४५. आगमसूत्रवृत्तिपुस्तकं लिखापितं स्वश्रेयसे । तन्मध्ये श्रीपंचमांगं सूत्रमिदं गृहीतं । सं० १६९४ वर्षे कार्तिकमासे द्वितीयायां तिथाविति मंगलं ।

## श्री० मु० वि० शा० सं० छाणी

**श्रीमहावीरस्तवनम्** प्र. ७३३

संवत् १६९४ वर्षे वैशाखमासे कृष्णपक्षे चतुर्दशीदिने बुधवासरे श्रीमद्**बर्हानपुर**-महानगरे लिखितं

## श्री जैन संघ ज्ञानभंडार. राधनपुर.

**श्रीशोभनस्तुतिः** ७३४

संवत् १६९४ वर्षे कार्तिकमासे शुद्धपक्षे सप्तम्यां तिथौ रविवारे लिखितमिदं श्री**सूर्यपुर**-बंदिरे लिखितं । वाच्यमानं चिरं जीयात् । ग्रंथाग्रंथ श्लोक संख्या २१२।। बाइ **कांहांनबाई** पठनार्थम्।।

## पं० श्री० ला० वि० सं० ज्ञानभंडार. राधनपुर.

**श्रीशांतिनाथस्तोत्रम्** प्र, ७३५

इति शांतिनाथस्तोत्रं । संवत् १६९४ वर्षे कार्तिक सुदि ४ । बुधवारे लिखितं० उपाध्याय-श्री श्री श्री श्री ।। **गुणकल्लोल**गणि पंडित श्री श्री श्री**देवकल्लोल**गणि । श्री**मानकल्लोल**-**दानकल्लोल**लिखितं ।।

## आ० श्री० वि० वी० सू० ज्ञा० मं० राधनपुर

**श्रीकल्पसूत्रम्** प्र. ७३६

संवत् १६९५ वर्षे शाके प्रथमभाद्रपदमासे कृष्णपक्षे चतुर्थीतिथौ शनिवासरे अंतर्वाच्यं लिखितं पं० श्री**सुरतांण**लिखितं ।।

## श्री वाडीपार्श्वनाथजी ज्ञानभंडार पाटण

**श्रीसूर्यप्रज्ञप्तिसूत्रम्** प्र. ७३७

संवत् सोल पंचाणूया वर्षे **वीसलनगर**सत्कभांडागारे प्रतिरियं मुक्ता चोपडागोत्रे सं. **ओघा** पुत्र सं. **उदा** भार्या **सरूपी** पुत्र सं० **धन्ना** सं. **आभू** भगिनी श्राविका **वीरा** स्वपुण्यार्थं श्रीसूर्यप्रज्ञप्तिसूत्रउपांगं भांडागारे मुक्तं । वाच्यमानं चिरं नंद्यात् ।।

## गां० गो० ना० सं० ज्ञ० भं० राजकोट.

**श्रीषट्नवकाररासः** प्र. ७३८

संवत् १६९६ वर्षे काति सुदि ११ दिने गणि श्री ५ श्री **न्यायसागर** तत् शिष्य मुनिवर-**वीरसागर** लिखितं **गंघाणीनगरमध्ये** लिखितं ॥ शुभं भवतु ॥ श्रीरस्तु ॥ श्रीः ॥

## श्री० जै० आ० पु० सुरत.

**श्रीतर्कभाषासूत्रम्** प्र. ७३९

लि० सं० १६९७ ज्येष्ठ वदी १४ वार रवौ श्री **बुर्हानपुरनगरे**..........विजयराज्ये महोपाध्यायश्री ५ श्री **देवविजयगणिचरणसेवकगणिधर्मविजयेन** लिपीकृता । स्ववाचनार्थं । शुभं भवतु लेखकपाठकयोः ॥

## मु. श्री. हं. वि. सं० शा. सं. वडोदरा.

**श्रीदशवैकालिकसूत्रबृहद्वृत्तिः** प्र. ७४०

संवत् **१**६९७ वर्षे आषाढमासे शुक्लपक्षे चतुर्थीदिने वार शुक्रे ॥ छ ॥ श्री **जेसल-मेरुनगरे** । ओसवालवंसे **दरडागोत्रे** । सा० **करमचंद** पुत्र सा० **रायचंद** लिपीकृतं ॥ छ ॥ शुभं भवतु ॥ कल्याणमस्तु ॥ ॥ छ ॥ श्रीरस्तु ॥ छ ॥ छ ॥ छ ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीधर्मरत्नमंजूषा** प्र. ७४१

प्रशस्तिः ॥ वाचकचक्रचक्रवर्त्तिभालतिलकायमानतपागच्छगगनांगगनभोमणि महोपाध्याय श्री५श्री **देवविजयगणि**शिष्य पंडितश्री**मानविजयगणि**वाचनार्थं लिखिता ॥ संवत् **१**६९७ वर्षे कार्त्तिक शुद १० गुरौ श्री **बर्हानपुरे** ॥ **भट परषोतम** लिखितं ॥ शुभं भवतु ॥ कल्याणमस्तु ॥ छ ॥ श्री ॥ छ ॥

## श्री० आ० क० सं० ज्ञानभंडार अमदावाद्

**श्रीशत्रुंजयउद्धारः** प्र. ७४२

सं० १६९७ वर्षे चैत्र सुदि १३ दिने पं० **विनयविमलगणि** शिष्य पं० **धनविमल-**लिखितं साध्वी **जीवी** पठनार्थं ॥ छ ॥

साह श्री **केशवजी** तथा श्राविका **इलाइ** पठनार्थं लिखितोऽयं उद्धारः शेत्रुंजय पर्वतस्य.

## श्री० हु० मु० सं० ज्ञा० भं० सुरत.

**श्रीसाधुवंदना** प्र. ७४३

संवत् सोलसताणुयइ। चैत्रमास। श्री अमदावादो रे। **समयसुंदर** कहइ मइ कीधी। साधु-वंदना सुगुरु प्रसादो रे ॥९॥ इति श्री साधुवंदना सम्माप्ता ॥ ढाल १८ गाथा ५१६ साधुपणे–ग्रंथाग्रंथ ॥ ७५० ॥ श्रीरस्तु ॥ पत्र २०

## आ० श्री० वि० ल० सू० सं० शा० सं. खंभात.

**श्रीअवचूरिः** (?) प्र. ७४४

सं. १६९८ वर्षे फागुण सुदि ६ गुरुवासरे **सिद्धिसूरि** चेला **ववेकरणेन** (विवेकरत्नेन) लिखतं स्वार्थे पाठनार्थं **उर्नागपुर**मध्ये लिखितं ॥

## आ. श्री. वि. दा. सू. सं. शा. सं. छाणी.

**श्रीरूपसेनचरित्रम्** प्र. ७४५

इति श्री ५। श्रीरूपसेनकथा संपूर्णा। ग्रंथाग्रंथ श्लोकाः १२७०। संवत् १६९८ वर्षे। वइशाख सुद ८। दिने कल्याणमस्तु। श्रीरस्तु ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

**श्रीकल्पकिरणावलिः** प्र. ७४६

संवत् १६९८ वर्षे कार्तिक सुदि ५ गुरौ लिपीकृतम्। करकृतमपराधं क्षंतुमर्हंति संतः। श्रीरस्तु। कल्याणमस्तु लेखकपाठकयोश्चिरं नंदतु ॥ छः ॥ श्री ॥

## आ० श्री० वि० मे० सू० सं० ज्ञा० भं० अमदावाद.

**श्रीगुर्वावलीस्वाध्यायः** प्र. ७४७

पंडित**वनेविजय** लिखितं. **मांनसुंदर**वाचनार्थं ॥ संवत् १६९८ वर्षे श्रावण वदी १३ कुजे ॥ लिखितमस्ति। श्रेयो बभूव।

## पं० श्री० वी० वि० ज्ञा० भं० अमदावाद.

**श्रीचंदराजानो रासः** प्र. ७४८

श्रीअंचलगच्छे भट्टारक श्री**कल्याणसागर**सूरिविजयराज्ये पंडित श्रीश्री**प्रेमजी**गणि तत् शिष्य**देवमूर्ति** लिपीकृतं स्ववाचनार्थं । संवत् १६९८ वर्षे **सुभुजनगर**मध्ये लिखितं दिनइ. मध्ये **ऋषभदेवजी** वाचनार्थं । श्री ॥

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

**श्रीदीपालिकाकल्प-गद्य** प्र. ७४९

प्रौढप्रत्यर्थिराजद्विरदकंठपीठकंठीरवायमाण पादशाह श्री ५ **अकबर सूर्य**सहस्रनामाध्यापक । श्रीशत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक ॥ महोपाध्याय श्री **भानुचंद्रगणि**-शिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाहश्री**अकबरजहांगीर**शाहिप्रदत्त ( पुस्तकहम । ) नासिह दिरज्ञगामद्वितीय द्वितीयाभिधान महोपाध्याय श्री ५. श्री**सिद्धिचंद्र**गणिशिष्यमुनि**सुद्धिचंद** लिखितं । संवत् १६९८ वर्षे भाद्रवा वदि १३ दिने श्री**विद्यापुरे** लिपीकृतं ॥ शुभं भवतु ॥ कल्याणमस्तु ॥

## प्र० श्री० कां वि० सं० शा० सं० वडोदरा.

**श्रीपाशककेवलिचरित्रम्** प्र. ७५०

संवत् १६९८ ॥ वर्षे । आसोइनी पुन्यमदिने ॥ लिखितं ॥ शुक्रवारे मुनि**चारित्रसौभाग्य**-लिखितं ॥ मुनि**रत्नसौभाग्य**वाचनार्थं ॥ श्री**हरणाद्री**मध्ये ॥ तपागच्छे ॥ श्रीः शुभवतां ॥ श्री श्री श्री श्री । कल्याणमस्तु ॥

## आ. श्री. वि. दा. सू. सं. शास्त्रसंग्रह. छाणी

**श्रीप्राकृतचंद्रिका** प्र. ७५१

वर्षे ज्ञाननवर्तुभूमिकलते (१६९८) मासे शुभे श्रावणे
पक्षे शुक्ल इति द्वितीयदिवसे बुद्धानगर्यामथ ।

शिष्यो देवनरेन्द्रकीर्तिगणिनां नाम्ना जगन्नाथसन् ( ? )
पुस्तं लेखयति प्रशस्तमनघं सत्प्राकृतव्याकृतेः ॥ १ ॥
शुभं भवतु । श्लोक १५००

## आ० श्री. वि० ल० स० शा० सं० छाणी

**श्रीसिंहासनद्वात्रिंशिका** प्र. ७५२

प्रशस्तिः । इति सिंहासनद्वात्रिंशिका समाप्ता ॥ छः ॥ पंडित श्री श्री श्री **सूरकुशलगणि-**शिष्यगणि **विबुधकुशलेन** लिखितं स्ववाचनाय संवत् १६९८ वर्षे पोषशुक्लद्वितीयादिने श्री**हलारदेशे वेढग्रामे** ॥ श्री ॥

## पं. श्री. वी. वि. ज्ञानभंडार. अमदावाद.

**श्रीअर्हन्नामसहस्रसमुच्चयः** प्र. ७५३

लि० **धर्मविजयेन** संवत् १६९९ वर्षे । श्रीः

## श्री जैन आनंद पुस्तकालय. सुरत.

**श्रीआवश्यकदीपिका** प्र. ७५४

संपूर्ण कृतः ॥ इयं षडावश्यकदीपिकार्थबंधसंख्यया । श्लोकानां हि सहस्राणि ज्ञेयानि अंकतः॥ ग्रंथाग्रंथ सहस्र ९००० । सं० १६९९ वर्षे कार्तिकमासे शुक्लपक्षे दशम्यां तिथौ गुरुवासरे श्री **सीरोहीनगर**मध्ये महाराज श्री **अषयराजजी**विजयराज्ये । लेषमस्तु । कल्याणमस्तु । श्री ॥

## श्री. मु. वि. शा. सं. छाणी.

**श्रीकल्पसूत्रम्** प्र. ७५५

संवत् १६९९ वर्षे कार्तिकमासे शुक्लपक्षे चतुर्दशीतिथौ सोमवासरे लिपीकृतं ऋषिश्री **हरजी** तत्शिष्यमुनि**नरसंघेण** आत्मार्थं **रामसर**मध्ये । शुभं भवतु । कल्याणमस्तु । श्रीरस्तु ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीकल्पसूत्रबालावबोधः** प्र. ७५६

प्रशस्तिः ॥ इति श्रीकल्पसूत्रं संपूर्णं । कल्पसूत्रसंख्या ॥ १२१६ सूत्र संवत ॥ १६९९ वर्षे ॥ पोषसिते ॥ प्रथम २दिने लिखितं ॥ श्रीरस्तु ॥ श्रीः ॥ कल्याणमस्तु ॥

## आ० श्री० वि० दा० सू० सं० सा० सं० छाणी.

**श्रीकायस्थितिप्रकरणम्** प्र. ७५७

प्रशस्तिः । इति लघ्वल्पबहुत्वं ॥ लिखितं च सकलवाचकसार्वभौम महोपाध्याय श्री ९ श्री**भावविजय**गणिशिष्य**मानविजय**गणिना ॥ संवत् १६९९ वर्षे मागसिर वदि १३ दिने ॥ **राजनगरे** ॥

## आ० श्री० वि० ल० सू० सं० ज्ञानभंडार खंभात

**श्रीकाव्यकल्पलता** प्र. ७५८

लेखिता चेयं प्रतिः संवत् १६९९ वर्षे श्री**स्तंभतीर्थनगर**वास्तव्य**धनजी**सधर्मचारिण्या शशधरकरनिकरसब्रह्मचारिब्रह्मचर्यादिगुणधारिण्या श्राविका**धनादि**संज्ञया ज्ञानावरणकर्मक्षयार्थं महोपाध्याय श्री श्री श्री **भावविजयगणि** शिष्यगणि**मानविजय**वाचनार्थं शोधिता चेयमध्ययनं विद्धतानेनैव यथावबोधं श्रेयोऽस्तु श्रीतपागण सुपर्व पर्वतम.......न नंदन वन कल्पश्रीविजयपक्षस्य कल्याणमस्तु । चिरं नंदतात् चेयमानंदयंती कोविदानिति । श्रीः

## आ० श्री. वि० दा० सू० सं० शा० सं० छाणी.

**श्रीदंडकस्तबकः** प्र. ७५९

प्रशस्तिः ॥ इति विचारषट्त्रिंशिकास्तोत्रं संपूर्णम् ॥ ॥ संवत् १६९९ वर्षे ॥ वैशाखवदि ९ भौमवासरे श्री**नवानगरे** ॥ गणिश्री**पद्मकुशल**लिखितं ॥ ज्ञानवृद्धयर्थं ॥ कल्याणमस्तु ॥ ॥ छ ॥ श्री ॥

## आ. श्री. वि. मे. सू. सं. ज्ञानभंडार अमदावाद.

**श्रीमाघकाव्यम्** प्र. ७६०

संवत् १६९९ वर्षे आषाढमासे कृष्णपक्षे एकादशीतिथौ वाचनाचार्यवर्य्य गांभीर्यधुर्य्य वा० श्री श्री १०८ श्री **गुणवर्धन**गणिगजेंद्राणां शिष्य पंडित श्री श्री ७ श्री **सोमजी** तत्शिष्य-पं. **शांतिहर्ष** तत् शिष्य **जिनहर्ष**लिखितं ॥ छ ॥ श्री श्रुतदेव्या० ॥ छ ॥ श्रीः ॥

## पं० श्री० उ० वि० सं० शा० सं० पाणस्मा.

**श्रीवाग्भटालंकारः** प्र. ७६१

संवत् १६९९ वर्षे आश्विनमासे शुक्लपक्षे चतुर्थीदिने रविवारे **अवरंगाबाद**ग्रामे भट्टारक विश्वविश्वंभराभालस्थलतिलकायमान भट्टारक श्री श्री श्री १०४ श्री **विजयदेवसूरि**शिष्यगणि-**विनीतविजय**लिखितमिदं पुस्तकं सुखाय भवतु ॥ छ ॥

## आ० श्री० वि० वी० सू० ज्ञानमंदिर राधनपुर

**श्रीवासुपूज्यरासः** प्र. ७६२

संवत १६९९ वर्षे ज्येष्ठ वदि प्रतिपदातिथौ भृगुवारे लिखितं ॥ श्रीरस्तु । श्री । शुभं भवतु ॥ **कडुआमति**गच्छे । बाइ **हेमाइ** पठनार्थं । कर्मक्षयार्थं लिखापितं । शुभं भवतु ॥

## श्री० नि० वि० जी० म० पु० पाटण.

**श्रीसिद्धयोगिनीभाष्यम्** प्र. ७६३

सं० १६९९ लिखितं मुनि**मतिरत्नेन** । **वाघउडा**मध्ये । श्रीरस्तु । कल्याणमस्तु ।

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

**श्रीपार्श्वनाथपुराणम्** प्र. ७६४

संवति १७०० वर्षे । आश्विन मासे । श्री श्री श्री**जिनराजसूरि**राज्ये । श्रीखरतरगच्छे । श्री**पट्टणा**नगरे । श्रीखेमशाखायां । व्यलेखि वा० **विद्याकीर्ति**गणिना वाच्यमाना चिरं नंदता-ल्लेखकपाठकयोः ॥

## मु. श्री. हं. वि. सं. शा. सं. वडोदरा.

**श्रीप्रत्येकबुद्धचतुष्पदी** प्र. ७६५

संवत् १७०० वर्षे मार्गशीर्षमासे कृष्णपक्षे द्वितीयातिथौ भृगुवासरे श्रीविधिपक्षगच्छे भट्टारक श्री ५ श्री **गजसागर**सूरीश्वर तत् शिष्य पं० श्री श्री श्री **ललितसागर** तत् शिष्य ऋ० श्री **माणिक्यसागर** तत् शिष्य ऋ० **ग्यांनसागर**लिखितं स्वपठनार्थं । शुभं भवतु इति श्रेयः ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीपृथ्वीचंद्रचरित्रम्** प्र. ७६६

प्रशस्तिः ॥ अंकतोऽपि ग्रंथाग्रं० ॥ २६५४ ॥ कृतिरियमुपाध्यायश्री**जयसागरस्य** ॥ संवत् १७०० वर्षे वैशाखमासे प्रथमपक्षे पतिपत्तिथावादित्यवारे चित्रानक्षत्रे ॥ श्रीमद्**ध्वज-वाटकदुर्गो सज्जनर्षिणा** इदं पृथ्वीचंद्राभिधानं चरितं व्यलिख्यत ॥ आ चंद्रार्कं नंदतादयं श्रीपृथ्वी-चंद्रचरिताभिधो ग्रंथः ॥

श्रीमद्वीरगणेशतः समभवद् गच्छस्थितिः पूर्वत-
स्तस्यां चन्द्रकुलं च **कोटिकगणं** श्रीवज्रशाखान्वितम् ।
पश्चाद् **दुर्लभराज**पर्षदि जिते वादिव्रजे सूरिभिः
सत्यार्थमकरोन्नृपः खरतरेत्याख्यां जगद्विश्रुताम् ॥ १ ॥

तस्मिन् खरतरगच्छे श्री**जिनमाणिक्य**सूरयोऽभवन् तत्पदानुक्रमः श्री**सुमतिमंदिर**गणि-तच्छिष्य श्री**जयनंदनजीगणिः** तच्छिष्यश्री**प्रेमधीर**मुनींद्राः अभवन् जगतीतले तत्पदांभोजभृंगा-भ**दुलिचंद**गणितच्छिष्य पं. ५. श्री**रत्नोदयः** तच्छिष्यपंडित**मल्लेन स्वात्मार्थं** श्रीपृथ्वीचंद्रराजर्षिचरित्रं लिपीचक्रे ॥ जंगमयुगप्रधान भट्टारक श्री**जिनचंद्र**सूरिविजयराज्ये ॥ संवत् १८७८ शाके १७४३ प्रवर्त्तमाने मासोत्तममासे श्रावणमासे प्रथमपक्षे तिथौ पंचम्यां गुरौ **लक्ष्मणा**पुरी-मध्ये नवाब **गाजद्दीनहैदर**विजयराज्ये ॥ श्रीरस्तु ॥ कल्याणमस्तु ॥

## श्री. हु० मु० ज्ञानभंडार सुरत.

**सर्वज्ञशतकस्तबकः** प्र. ७६७

संवत् १७०० वर्षे वैशाख सुदि २ रवौ पंडितचक्रचक्रवर्ति पंडित श्री**देवसागर**गणि-शिष्य पं० कनकसागरलिखितं. स्ववाचनकृते श्री**राजनगरे** ॥ श्रेयोऽस्तु ॥ चिरं नंदतु ॥ श्रीः ॥

## पं० श्री. उ० वि० सं० ज्ञा० भं० चाणस्मा.

**श्रीन्यायरत्नप्रकरणम्** प्र. ७६८

॥ संवत्–शशधर–गगन–मुनि–शशि १७०१ वर्षे ॥ आश्विनमासे शुक्लपक्षे दशमीवासरे सोमवारे । लिखितं श्रीविद्यापुरोप**कंटस्याहपुरे** पादशाह श्री **महम्मुद** सुरत्राणदत्तबहुमान तपा-गच्छाधिराज सकल भट्टारक शिरोमणि भट्टारक श्री ५ श्री **विजयदेवसूरीश्वर**चरणारविंदयुगल-सेवालिसमानगणि**नयविजयेन** ॥ शुभं भूयात् लेखकपाठकयोः ॥ यादृशं.....................
.....................................मम दोषो न दीयते ॥ १ ॥ छ ॥ छ ॥ :

## आ. श्री० वि० मे० सू० सं० ज्ञान भंडार अमदावाद

**कर्मग्रंथस्तबकः** प्र. ७६९

संवत् १७०२ ज्येष्ठवदी १० गुरौ लिखितं श्रीमद्**कल्याणविजय**शिष्येण वाचक**धन-विजयेन** परोपकरादिपुण्यकृते.

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

**श्रीपृथ्वीराजवेली सवृत्तिः** प्र. ७७०

संवत् १७०२ वर्षे मार्गशीर्षमासे श्री**मद्राजद्रंगे** पृथ्वीराजस्य वल्ली सटीका लिपीकृता ॥ पण्डित श्री ५ श्री **लक्ष्मीसोमगणि** तत् भ्राता श्री. ५ **सांमलसोमगणि** तच्चरणसेवक **जगवल्लभेन** लिखितमस्ति ॥

## श्री० मु० वि० सं० शा० सं० छाणी

**श्रीसम्यक्त्वकौमुदी** प्र. ७७१

प्रशस्तिः । संवत् १७०२ वर्षे फाल्गुनमासे कृष्णपक्षे त्रयोदशीतिथौ भौमवारे **श्रीमल्लवणकरणसरसि** लिखिता प्रतिरियम् । शुभं भूयात् । श्रीरस्तु ।

## श्री. जै. आ. पु. सुरत.

**श्रीऔपपातिकसूत्रवृत्तिः** प्र. ७७२

संवत् १७०३ वर्षे कार्तिकमासे कृष्णपक्षे द्वितीयातिथौ शुक्रवारे लिखितं सूराणा **ताराचंद वीजाउत** । शुभं भूयात् लेखकपाठकयोः । आचार्य श्री श्री श्री श्री श्री श्री श्री **कल्याणजी**प्रसादात् माहारिष श्री **हरषाजी** पठनार्थं श्री **मेडता**मध्ये

## आ० श्री० वि० मे. सू० सं० ज्ञा० भं० अमदावाद.

**श्रीकल्पदीपिका** प्र. ७७३

संवत् १७०३ वर्षे कार्तिकमासे शुक्लपक्षे ११ तिथौ शुक्रवारे लिखितं गणि**गजेंद्रगणि**-श्री श्री ११ श्री श्री **लब्धिविजय**गणि तत्शिष्य पदपंकज मधुकरशिष्य**हर्षविजयेना**लिखि **पदधरीनगरे** श्रीचिंतामणिपार्श्वनाथप्रसादात् । श्रीरस्तु । कल्याणमस्तु ॥ छः ॥ श्रेयोऽस्तु ॥ शुभं भवतु ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी

**श्रीकल्पसूत्रं-सवृत्ति** प्र. ७७४

प्रशस्तिः ॥ इति कल्पलतानाम्नी कल्पसूत्रटीका समाप्ता । संवत् १७०३ वर्षे ॥ कार्त्तिक सुदि ११ सोमे ॥ श्री**खरतरगच्छे** । भट्टारक युगप्रधान श्री**जिनरत्नसूरि**शिष्येण उपा०-**साधुहर्षेण** लिखितं ॥ श्री**आगरानगरे** ॥ श्रीस्तात्

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीज्योतिषनाममाला** प्र. ७७५

सं. १७०३ वर्षे शाके १५६८ प्रवर्त्तमाने पंडित श्री ५ श्री**हर्षविजय**लिखितं **वांसा**ग्राम-मध्ये । आसो सुदि ५ दिने । इति मंगलं ।....…... ....

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीज्योतिषनाममाला** प्र. ७७६

प्रशस्तिः ॥ इति श्री ज्योतिषनाममाला संपूर्णा ॥ संवत् १७०३ वर्षे शाके १५६८ प्रवर्त्तमाने ॥ पंडित श्री ५ श्री **कनकविजय**गणिशिष्य पंडित श्री ५ श्री **हर्षविजयगणि** तत् भ्रातृ गणि**जयविजय** लिखितं **वांसा** ग्राममध्ये आसो सुदि५ दिने । इति मंगलं ॥ यादृशं पुस्तकं दृष्ट्वा.......................................मम दोषो न दीयते ॥ १ ॥

## सा० श्री० हे० सं० ज्ञा० भं० साणंद.

**श्रीदशवैकालिकवृत्तिः** प्र. ७७७

संवत् १७०३ वर्षे चैत्र वदी अष्टमी तिथौ शनिवासरे श्री**राजनगरे** गांधी **हेमा** सुत गांधी **हरजी** तस्य भार्या बाइ **मरघादे** तस्य सुत **पिमा** आत्मपुण्यार्थं श्रीदशवैकालिकसूत्रं सावचूरि लिखितं । शुभं भवतु ॥

## आ० श्री. वि० वी० सू० ज्ञा० मं० राधनपुर.

**श्रीरत्नसारकुमाररासः** प्र. ७७८

सं. १७०३ वर्षे शाके १५६८ प्रवर्तमाने दक्षणायनगते श्रीसूर्ये हैमंतनाम्नि ऋतौ मासोत्तम मृगशिर मासे कृष्णपक्षे नवमीतिथौ रविवासरे पंडित श्री ५ **लक्ष्मीचंद** तत् शिष्य चेला **भीमजी** लिपीकृतं । शुभमस्तु । कृष्णपक्षे नवमीतिथौ रविवासरे पंडित श्री ५ श्री लक्ष्मीचंद तत् शिष्य चेला **भीमजी** लिपीकृतं । शुभं भवतु ॥

## श्री० मु० वि० शा० सं० छाणी.

**श्रीशालिभद्रचोपाई** प्र. ७७९

पंडित श्री **मेरुविजय**गणिशिष्य**प्रेमविजय** लिखितं । संवत् १७०३ वर्षे श्रावणमासे कृष्णपक्षे तिथि २ दिने वार रवौ पंडित श्री **वृद्धिविजयगणि** शिष्य मुनि**वीरविजय**पठनार्थं

## श्री. मु० वि० शा० सं० छाणी.

**श्रीअवंतीसुकुमालरासः** प्र. ७८०

संवत् १७०४ वर्षे पौषमासे शुक्लपक्षे चतुर्थी रविदिने लिखितं श्री**अंचलगच्छे** परीख **जसू** सुत परीख **लीलाधर** भार्या **सहिजां** पुत्री परमधर्मिणी श्राविका **धनबाइ** पठनार्थं ॥ श्रीस्तात् ॥ श्री**अहम्मदावाद**मध्ये ॥ श्रीः ॥

## श्री. जैनविद्याशाळा० ज्ञा० भं० अमदावाद.

**श्रीऋषिमंडलस्तबकः** प्र. ७८१

लिखितं गणि **ऋद्धिसुंदरेण** ॥ संवत् १७०४ वर्षे श्रावण सुदि ८ ॥ सोनी **कपुरचंद** तत्पुत्री **रुषमा** वाचनार्थं श्री **मेदिनोपुरे** ॥ शुभं भवतु ॥

## आ० श्री० वी० वि० सू० ज्ञा० भं० राधनपुर.

**श्रीकायस्थितिस्तवनाचूरिः** प्र. ७८२

संवत् १७०४ वर्षे श्री**नवानगरे** श्री**अंचलगच्छे** वा० श्री**भावशेखर** गणि लिखितं मु० **भुवनशेखर**पठनार्थं ॥

## श्री नि० वि० जी० म० पु० चाणस्मा.

**श्रीनारचंद्रज्योतिषः** प्र. ७८३

संवत् १७०४ वर्षे श्री **अंचलगच्छे** पठनार्थं लिखितं श्री **पद्मसागरगणिना** श्री **बुरहानपुर**मध्ये ॥

## आ. श्री. वि. दा. सू. सं. शा. सं. छाणी.

**श्रीनेमनाथचरित्रम्** प्र. ७८७

प्रशस्तिः ॥ इति श्रीयादवकुलदिणयरस्स चरितं संपूर्णं स्यात् ॥ संवत् १७०४ ॥ वर्षे आश्विनकृष्णपक्षे तिथौ अमावस्यां शनिवासरे च शुभयोगे **पिपणापुरे** ॥ लिखितं पूज्याद्य ऋषि **पैमाशिशु** ॥ छ ॥ छ ॥ छ ॥

## आ० श्री० वि० वी० सू० ज्ञा० मं० राधनपुर.

**श्रीमन्त्रस्तव– धरणोरगेंद्रस्तवटीका.** प्र. ७८८

सं० १७०४ वर्षे वैशाखशुक्लचतुर्दश्यां **बृहन्नगरे** ॥ ऋद्धिवृद्धिरस्तु ॥

## श्री. जै० सं० ज्ञा० भं० राधनपुर.

**श्रीनवतत्वस्तबकः** प्र. ७८९

संवत् १७०५ वर्षे मार्गशीर्ष वदि २ दिने श्रा० **प्रेमलदे**पठनार्थं । शुभं भवतु ॥ सकलपंडितशिरोमणि पं. श्रीश्री**विजयगणि**शिष्य ग० **मेरुविजयो** लिलेख ॥ श्री**सुरतिबंदिरे** ॥

## श्री. मु. वि. शा. सं. छाणी.

**श्रीविपाकसूत्रम्** प्र. ७९०

संवत् १७०५ वर्षे वैशाखशुक्लद्वितीयायां जगद्गुरुभट्टारकश्री**हीरविजयसूरीश्वर**-पट्टालंकार भ० श्री**विजयसेनसूरि**पट्टोदयाचलदिनकरसमान युगप्रधानोपमान भ० श्रीविजय**देवसूरीश्वराणां** आचार्यश्री**विजयसिंह**सूरीश्वरादिप्रवर्द्धमानपरिवारबंधुराणां श्री**शत्रुंजय**गिरनार-प्रमुखानेकतीर्थयात्रासंघतिलककृतार्थितमनुष्यावतारया श्राविकया **फूला**नाम्न्या प्रतिरियं प्रतिलाभिता । वाच्यमाना चिरं जयतु ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीचंपकश्रेष्ठिकथा** प्र. ७९१

प्रशस्तिः ॥ इति श्रीचंपकश्रेष्ठिकथा संपूर्णा ॥ वाचकचक्रचक्रवर्त्ति महोपाध्याय श्री ५ श्री**देवविजय**गणिशिष्यगणि**दयाविजयेन** लिखितं ॥ श्री**सूर्यपुरे** ॥ संवत् १७०६ वर्षे ज्येष्ठ मासे १३ दिने ॥ मुनि**नयविजय**पठनार्थं ॥

## आ० श्री० वि० मे० सू० सं० ज्ञा० भं० अमदावाद.

श्रीवीतरागस्तवः प्र. ७९२

संवत् १७०६ वर्षे कार्तिकमासे शुक्लपक्षे एकादशी सोमे गणिगुणगरिष्ठगणिश्रीधर्म्मसौभाग्यशिष्यपंडित**विजयसौभाग्ये**नालेखि **भृगुकच्छे** मुनिकृपासौभाग्यपठनकृते । चिरं जियात् ॥

## श्री० गां० गो० ना० सं० ज्ञा० भं० राजकोट.

श्रीलोकनालिकाबालावबोधः प्र. ७९३

संवत् १७०६ वर्षे मिति कार्तिक वदि ३ वार रविपुत्रदिने लिखितं **कुअरपाल** धर्मार्थी स्वयं समजगार्थं ॥ शुभं भवतु ॥ कल्याणमस्तु ॥

## मुनि श्री हुकममुनिजी ज्ञानभंडार सुरत.

श्रीउपदेशमालाप्रकरणम् प्र. ७९४

सं० १७०८ वर्षे फागुण वदि ४ बुधे लिखितं श्री**काश्मीरपुरे** । पंडित**देवकल्लोलगणिना** श्रा० धनबाई पठनार्थं ॥ शुभं भवतु ॥

## श्री० जै० वि० शा० ज्ञा० भं० अमदावाद.

श्रीपर्यंताराधनास्तवकः प्र. ७९५

संवत् १७०८ वर्षे माघ सुदी ४ रवौ लिखितं **नवीननगरे** पं. प्रवर पं० श्री**भक्तिकुशलगणि**शिष्यगणि**सुंदरकुशलेन** । लेखकवाचकयोः श्रीरस्तु ॥

## श्री० मु० वि० शा० सं० छाणी.

श्रीबृहत्संग्रहणीसूत्रम् प्र. ७९६

संवत् १७०८ वर्षे शुक्लपक्षे दशम्यां तिथौ आदित्यवारे आचार्य श्री. ( ...... रद ) सूरिसंताने अनुक्रमेण वाचनाचार्यश्री**समयकल्लोल**गणिवराणामंतेवासी शिष्यमुख्य पंडितोत्तमश्री**धर्मकल्लोला**नामंतेवासी शिष्यमुख्य पंडितोत्तम श्रीमुनि**मेरुगणिवराणां** शिष्य पं. **ज्ञानहर्ष**मुनिनालेखि शिष्य पं० चिरं. **रामचंद**पठनार्थं श्री**मरोटमहादुर्गे** । श्रीरस्तु ॥

## श्री जैन संघ ज्ञानभंडार पाटण.

श्रीआचारांगसूत्रम् प्र. ७९७

संवत् १७१० वर्षे वैशाख शुदि ३ रवौ अहम्मदावादवास्तव्यश्रीश्रीमालीज्ञातीयवृद्ध-शाखीय सा. अदा भार्या चंगादे सुत सा. केसवभार्या मेघबाईनाम्न्या श्रीआचारांगसूत्रप्रतिः प्रदत्ता ॥ पंडित........................................................................ ।

शुभं भवतु ॥ वाच्यमानं पुस्तकं चिरं नंदतु ॥

## श्री. जै० सं० ज्ञा० भं० सीनोर.

उपदेशमालाप्रकरणम् प्र. ७९८

संवत् १७१० वर्षे वैशाखमासे शुक्लपक्षे अक्षयतृतीयादिने श्रीखंभाइतनगरमध्ये लिखितं. शुश्राविका फूलापठनार्थम् । श्रीरस्तु ॥ कल्याणमस्तु ॥

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

श्रीजैनतत्त्वसारः सटिप्पनः प्र. ७९९

लिखितश्च सं. १७१० वर्षे श्रीदिल्लीमहानगरे पं० रविवर्द्धनगणिना स्ववाचनकृते.

## प्र. श्री. का. वि. सं. शा. सं. वडोदरा.

श्रीदशवैकालिकसूत्रस्तबकः प्र. ८००

संवत् १७१० वर्षे आश्विनमासे शुक्लपक्षे एकादशीतिथौ बृहस्पतिवासरे श्रीवीरपुर-नगरे लिपीकृता एषा पुस्तिका । सुश्राविका द्वादशव्रतधारिणी बाई नांनो पठनार्थं । शुभं भूयात् ॥

## श्री. नि० वि० जी० म० पुस्त० चाणस्मा.

श्रीधन्नशालीभद्रचोपाई प्र. ८०१

अथ संवत् १७१० वर्षे मागसिर सुदि मौनएकादशीदिने ॥ पंडित श्री ५ श्री कर्पूरविजय-गणिशिष्यमुनिरूपविजयलिपीकृतं ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**श्रीनिरयावलिसूत्रम्** प्र. ८०२

संवत् १७१० वर्षे मृगशिर वदी ६ दिने सोमवारे **गोगुंदा**नगरे लिखितं महोपाध्याय श्री५ श्री**कीर्तिविजय**गणिशिष्यपंडित**जिनविजय**गणिना । लेखकपाठकयोः शुभं ।

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**मूर्खशतकं सस्तबकं** प्र. ८०३

प्रशस्तिः ॥ इति मूर्खशतकं संपूर्णं ॥ छ ॥ संवत् १७१० वर्षे ॥ मृगशिर वदि ६ दिने ॥ **गोगुंदा**नगरे ॥ लिखितं पं० **जिनविजयगणिना** ॥ श्रीः ॥

## आ० श्री. वि० दान० सू० सं. सा० सं० छाणी.

**श्रीधनपालकथा** प्र. ८०४

प्रशस्तिः ॥ इति गीतार्थसाधुसंवासे धनपालपंडितकथा ॥ श्रीमन्नृपविक्रमादित्यस्य रौद्रमुनिमहीसंख्याब्दे (१७११) भाद्रवामासे कृष्णपक्षे तिथौ सप्तम्यां मंगलवारे लिखितमिदं योगी-र्ष्यणरातमामार्थाय (?)॥ **त्रिहाट्टकपुर**मध्ये ॥ भद्रं भूयात् लेखकपाठकयो र्द्वयोरिति। शुभमस्तु। श्रीरस्तु॥

## आ० श्री० वि० वी० सू० ज्ञा० भं० अमदावाद.

**श्रीकालिकाचार्यकथा** प्र. ८०५

संवत् १७११ संयुक्तमाघसितदशम्यां तिथौ **वृद्धोकेशज्ञा**तीय सा. **रायमल्ल** पुत्र सा. **रायकरण सहस्रकिरणा**भ्यां स्वश्रेयसे श्रीकालकाचार्यकथा स्वीयद्रव्यव्ययेन भांडागारार्थं गृहीतेति.

## श्री० जै० आ० पु० सूरत.

**श्रीमेघकुमारचोपाई** प्र. ८०६

सं० १७११ वर्षे शाके १५७६ प्रवर्त्तमाने पं. **लालजीकेन** लिपीकृता शहेर **पट्टणा**नगरे । आश्विन सुदी १० भोमवासरे । श्राविका **जमकादे** पठनार्थं । श्रेयोऽर्थम् ॥

## आ० श्री. वि० दा० सू० सं० सा० सं० छाणी.

**संग्रहणी त्रिपाठः** प्र. ८०७

संवत् १७११ वर्षे शाके १५७६ प्रवर्त्तमाने वैशाखमासे शुक्लपक्षे १५ तिथौ शुक्रवासरे श्री**बरहाणपुर**मध्ये श्रीखरतरगच्छे पंडित श्री **दयारत्नजी** शिष्य **मतिसिंहेन** लिपीकृतं स्वपठनाय ॥ कल्याणमस्तु । श्रीचिंतामणिप्रसादात् ॥

## आ० श्री० वि० दा० सू० सं० शा० सं० छाणी.

**तर्कभाषावृत्तिः** प्र. ८०८

संवत् १७१२ वर्षे पोष सुद ८ दिने महोपाध्याय श्री ५ श्री**अमृतविजय**गणिचरणेंदीवरचंचरीकेण मुनि**दीप्तिविजयेन** लिखिता स्ववाचनार्थं ॥ श्री**स्तंभतीर्थ**बंदिरे वाच्यमाना चिरं जयतु ॥ श्रीरस्तु ॥

## मु. श्री हं. वि. सं. शास्त्रसंग्रह. वडोदरा.

श्री**भावारिवारणस्तोत्रम्** प्र. ८०९

( सवृत्ति )

संवत् १७१२ वर्षे कार्तिकशुक्लदशम्यां चंद्रे लिखितं **नरसिंहदासेन** प्रमोदार्थं ॥ श्री ॥

## आ० श्री० वि० वी सू० शा० सं० अमदावाद,

**यशोविजयकृत–सीमंधरजिनस्तवनम्** प्र. ८१०

संवत् १७१२ वर्षे चैत्र सुद ११ वार बुधे लिखितं गांधी **मनजी** लिखापितं ॥ ग्रं. ४२२

## आ० श्री० वि० मे० सू० सं० ज्ञा० भं० अमदावाद.

**श्रीरघुवंशमहाकाव्यम्** प्र. ८११

संवत् नेत्रभुजभूधरेन्दु (१७१२) मितवर्षे शुचिमासे शुक्लपक्षे नवम्यां तिथौ सोमवासरे श्री**दिल्लीनगरे** भ० श्री**जिनवर्धनसूरयः** तेषां शिष्या महो० श्री**विजयवर्धना**स्तत्शिष्येण पंडितप्रवरेण पं० श्री **रागानंदे**नालेखि वक्ताचक्रचूडामणिपातिसाहीश्री**औरंगये**म**विजय**निजामराज्ये ॥ श्रीरस्तु श्रीश्रमणसंघस्य । लेखकपाठकयोः श्रीरस्तु ॥

